# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]




१८ वर्षे, ३ अङ्कः

संवत् २०२०

प्रकाशनतिथिः

मार्गशीर्षामावस्या, संवत् २०२०

# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

[ त्रैमासिकी ]

सम्पादकः

श्रीक्षेत्रेशचन्द्रचट्टोपाध्यायः ।




१८ वर्षे, ३ अङ्कः

संवत् २०२०

# विषयानुक्रमणिका





// सारस्वती सुषमा
वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१८ वर्षः } मार्गशीर्षपूर्णिमा, संवत् २०२० { ३ अङ्कः

# शब्दमाश्रित्य व्यवहारपथमागतानां लिङ्गानां निर्णयः

श्रीसभापत्युपाध्यायः, संमानितप्राध्यापकः, वा० सं० वि० वि० वाराणसी ।

अदृश्यं दर्शयद्दृश्यं प्रपञ्चं परमाद्भुतम् ।
दृश्यं तत्सत् समुद्धर्तुं कारुण्यं मे प्रयच्छतु ॥
शब्दगं वार्थगं लिङ्गं सर्वभाषासु विश्रुतम् ।
विविच्य विदुषां प्रीत्यै तत्स्वरूपं विभास्यते ॥

विश्वस्मिन् विश्वे व्यवहृतिपथमवलम्बमानासु निखिलभाषासु प्रतीयमानं वाच्यतया द्योत्यतया वा शब्दनिष्ठवृत्तिनिरूपकं लिङ्गं शाब्दीं विषयतां नातिक्रामति । बहुषु पाणिनीयसूत्रेषु कात्यायनीयवार्त्तिकेषु च लिङ्गबोधकपदोपादानाल्लिङ्गानां प्रातिपदिकार्थत्वं तदभिमतमित्यत्र नास्ति संशयः ।

कायिकवाचिकमानसिकामयचिकित्सको भगवान् पतञ्जलिस्तु तत्र तत्र कण्ठरवेण लिङ्गस्य प्रातिपदिकार्थत्वं तत्स्वरूपञ्च विस्तरेण निरूपितवान् । तथा हि—"प्रातिपदिकार्थलिङ्ग-परिमाणवचनमात्रे प्रथमा" ( २-३-४६ ) इति सूत्रे भाष्ये—"अथ लिङ्गग्रहणं किमर्थम् ? स्त्री पुमान् नपुंसकमित्यत्रापि यथा स्यात् । नैतदस्ति प्रयोजनम् । एष एव चात्रास्ति प्रातिपदिकार्थः । इदं तर्हि कुमारी वृक्षः कुण्डमिति" इति, "यत्प्रातिपदिकं स्त्रियां वर्तते तस्मात् टाबादयो

भवन्ति। कस्मिन्नर्थे ? स्वार्थे इति" इति च। "ह्रस्वो नपुंसके प्रातिपदिकस्य" (५-३-७४) इति सूत्रे भाष्ये—"किञ्च नपुंसके ? नपुंसकं यस्य गुणः। कस्य च नपुंसकं गुणः ? प्रातिपदिकस्य" इति। "कुत्सिते" (५-३-७४) इति सूत्रभाष्ये—"अथवा स्वार्थमभिधाय शब्दो निरपेक्षं द्रव्यमाह समवेतम्" इत्युक्तम्।

अत्र कैयटः—"स्वशब्दोऽऽत्मीयवचनोऽर्थशब्दोऽभिधेयवचनः। स्वोऽर्थः स्वार्थः। स चानेकप्रकारो जातिगुणक्रियासम्बन्धस्वरूपलक्षणः। यथा गौः शुक्लः पाचको राजपुरुषो डित्थ इति। स्वार्थमभिधाय तेन स्वार्थेन समवेतं द्रव्यमाह शब्दः। निरपेक्ष इत्यनेन (भाष्येण) तद्दर्शयति—यथा द्रव्येऽभिधातव्ये स्वार्थमपेक्षते शब्दो न तथा स्वार्थेऽभिधातव्येऽर्थगतं निमित्तान्तरमपेक्षते, द्रव्यशब्देन चेदं तदिति सर्वनामपरामर्शयोग्यं वस्त्वभिधीयते। तत्र जातिशब्दो यदा जातौ वर्तते तदा आरोपितस्वरूपां स्वरूपेणैकीकृतां जातिमाहेति। तदा स्वरूपं स्वार्थः। जातिस्तु द्रव्यम्। यदा तु जातिविशिष्टं द्रव्यमाह तदा जातिः स्वार्थः। शुक्लादयो यदा गुणजातौ वर्तन्ते तदा तेषां स्वरूपं स्वार्थः, जातिस्तु द्रव्यम्। यदा गुणे वर्तन्ते तदा गुणसामान्यं स्वार्थः, गुणो द्रव्यम्। यदा द्रव्ये वर्तन्ते तदा गुणः स्वार्थः" इति।

"समवेतस्य लिङ्गं वचनं विभक्तिं च" इति भाष्यम्। अस्य आहशब्द इति शेषः। लिङ्गं स्त्रीत्वादि, वचनं संख्या, विभक्तिः कारकम्। यद्यपि लोके पदादुच्चरितात् पञ्चार्थाः युगपत्प्रतीयन्ते न तु क्रमेण, शब्दस्य विरम्य व्यापाराभावात्; तथापि शास्त्रसंव्यवहाराय कल्पिताभ्यामन्वयव्यतिरेकाभ्यां प्रयोगार्हस्य प्रातिपदिकस्य कल्पितामर्थवत्तां कल्पितन्यायवशात् क्रमवतीमाश्रित्येदमुच्यते। क्रमश्चेद्दशः—"नागृहीतविशेषणा बुद्धिर्विशेष्यमवगाहते" इति न्यायात् पूर्वं स्वार्थाभिधानेन भाव्यम्, पश्चात्तद्विशिष्टस्य लिङ्गाद्याश्रयस्य द्रव्यस्याभिधानेन। ततो भेदापेक्षबहिरङ्गसंख्यापेक्षया लिङ्गमन्तरङ्गमिति तदभिधीयते, ततः संख्या। सा हि विजातीयक्रियापेक्षसाधनापेक्षया सजातीयापेक्षाऽन्तरङ्गा। संख्याभिधानानन्तरन्तु कारकाभिधानमिति क्रमेण प्रतीयमानं स्वार्थद्रव्यलिङ्गसंख्याकारकरूपं पञ्चकं प्रातिपदिकार्थः।

ननु लिङ्गस्य प्रातिपदिकार्थत्वे "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" (२-३-४६) इति सूत्रे लिङ्गग्रहणं व्यर्थम्, प्रातिपदिकार्थे प्रथमाविधानेन लिङ्गस्यापि प्रातिपदिकार्थतया तत्र प्रथमासिद्धेरिति चेन्न, तद्वैयर्थ्यापत्त्याऽत्र सूत्रे नियतोपस्थितिकस्य प्रवृत्तिनिमित्ततदाश्रययोर्वा प्रातिपदिकार्थपदेन ग्रहणस्य ज्ञापनात्।

## शब्दमाश्रित्य व्यवहारपथमागतानां लिङ्गानां निर्णयः

वस्तुतस्तु "अर्थे प्रथमा" इति न्यस्यता मनोरमाकृता स्वादीनां प्रातिपदिकादेव विधानेन कस्यार्थे इत्याकाङ्क्षायां यस्मात् स्वादिविधिस्तदर्थं इत्यस्य लाभेन प्रातिपदिकग्रहणस्य लिङ्गादिग्रहणस्य च वैयर्थ्यं स्पष्टमेवोक्तम्। सूत्रोपक्रमे संख्याविध्येकवाक्यतयाऽव्ययेभ्यः सुपोऽप्राप्त्या तेभ्यः प्रातिपदिकग्रहणस्य विधानार्थत्वं वदता "तद्धितश्चासर्वविभक्तिः" इति सूत्रे "बहुषु बहुवचनम्" इति सूत्रे च ज्ञापकादिना प्रकारान्तरेणाव्ययेभ्यो विभक्तिं साधयता भाष्यकृताऽपि प्रातिपदिकग्रहणं प्रत्याख्यातप्रायम्।

मुनित्रयाद्यभिमतस्य लिङ्गस्य स्वरूपजिज्ञासायां "स्त्रियाम्" इतिसूत्रस्थभाष्यमाश्रित्य किञ्चिदुच्यते। "स्त्रियाम्" इति सप्तमीनिर्देशेन कार्य्यान्तरविधानायानूद्यत इति गम्यते। प्रसिद्धस्यार्थस्य कार्य्यान्तरविधानायानुवाददर्शनादिह व्याकरणे प्रातिपदिकादिवत् स्त्रियाः परिभाषितत्वाभावाल्लोके चाप्राणिषु खट्वादिषु स्त्रीत्वव्यवहृतेरदर्शनाद् भगवान् भाष्यकार आह— "स्त्रियाम् इत्युच्यते, का स्त्री नाम? लोकत एते शब्दाः प्रसिद्धाः स्त्री पुमान् नपुंसकमिति। यल्लोके दृष्ट्वा एतदध्यवसीयते इयं स्त्री, अयं पुमान्, इदं नपुंसकमिति। सा स्त्री स पुमान् तन्नपुंसकमिति। किं पुनर्लोके दृष्ट्वैतदध्यवसीयते–इयं स्त्री, अयं पुमान्, इदं नपुंसकमिति लिङ्गम्। किं पुनस्तत्? "स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः। उभयोरन्तरं यच्च तदभावे नपुंसकम्॥" इति। स्तनकेशवतीत्यत्र भूमादौ मतुप्। एवं लोमश इत्यत्रापि। स्तनकेशवत्त्वञ्च प्रसिद्धत्वादन्यस्यापि स्त्रीप्रतिपत्तिहेतोः कुमार्य्यादिगतस्योपलक्षणम्, एवं लोमशत्वमपि पुंविज्ञानहेतोः कुमारादिगतस्यान्यस्योपलक्षणं बोध्यम्। "उभयोरन्तरम्" इत्यत्रान्तरशब्दः सदृशार्थकः। तथा च तदभावे स्तनकेशवत्त्व-लोमशत्वोभयोरभावे सति यदुभयोरन्तरं सदृशं तन्नपुंसकम्। तेनाव्ययाख्यातार्थयोरुभयाभावेऽपि लिङ्गवत्त्वेन सादृश्याभावान्न नपुंसकत्वापत्तिः। तदभावे इत्युक्त्या मयूरीकुक्कुटादीनां स्त्रीपुंससमुदायानां नपुंसकत्वं निराकृतं वेदितव्यम्, अन्यथाऽत्रोभयोरन्तरमित्यनेन नपुंसकत्वापत्तिः। भवति हि समुदायसमुदायिनोरनवयवयोः सदृश इति नपुंसकत्वं दुर्वारं स्यात्। यदि तु "परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः" इत्यनुशासनेन समुदाये परलिङ्गकत्वारोपान्न नपुंसकत्वप्रसक्तिरत्रेत्युच्यते, तदा वस्तुस्वरूपनिरूपणपरमेवैतदवगन्तव्यम्।

ततः परं "स्तनकेशवती" इति लक्षणे दूषणान्याह भाष्यकारः—"लिङ्गात् स्त्रीपुंसयोर्ज्ञाने सति भ्रूकुंसे टाप् प्राप्नोति। यदि लोके दृष्ट्वा एतदध्यवसीयते इयं स्त्री, अस्ति तद् भ्रूकुंसे। इह चञ्चाः पश्य, वध्रिकाः पश्य, खरकुटीः पश्येति "तस्माच्छसो नः पुंसि" इति नत्वं

प्राप्नोति। यद्धि लोके दृष्ट्वैतदध्यवसीयते अयं पुमान् इति, अस्ति तद् वध्रिकादिषु" इति भाष्यम्। ननु "स्तनकेशवती स्त्री" इति लक्षणे नित्ययोगे मतुब्विज्ञानाद् भ्रूकुंसे तदभावात् स्त्रीत्वाभाव इति चेन्न, प्रतिपत्तॄणां नित्यलिङ्गदर्शनेन तत्रापि स्त्रीत्वप्रसक्तेः सत्त्वात्, केशवपने च तदानीं केशसम्बन्धाभावात् स्त्रियामपि तदभावप्रसङ्गाच्च। स्तनकेशवतीत्यत्रातिशये मतुबित्यपि न, तदतिशयसम्बन्धस्य कुमार्य्यामुत्तरकालभावित्वात्ततः प्राक् स्त्रीत्वाभावापत्तेः।

किञ्च खरकुटी नापितगृहम्, चञ्चा केशनिर्मितपुमान्, वध्रिका केशमयी रज्जुः। एतेभ्यो बहुकेशवत्त्वरूपसादृश्यादिवार्थे कनि तस्य लुपि तत्र मनुष्यवाच्यत्वसत्त्वेन पुंस्त्वात् खरकुटीः पश्य, चञ्चाः पश्य, वध्रिकाः पश्य इत्यादौ "तस्माच्छसो नः पुंसि" (६-१-१०३) इति नत्वापत्तेश्च "स्तनकेशवती स्त्री" इति लिङ्गविषयकं दर्शनं हेयमेव।

अपि च, तद्दर्शने खट्वावृक्षादिषु लिङ्गं न सिध्येदुक्तलक्षणाभावात्। यद्धि लोके दृष्ट्वैतदध्यवसीयते इयं स्त्री अयं पुमानिति, न तत् खट्वावृक्षयोरुपलभ्यते। पूर्वोक्तदर्शने तयोः "उभयोरन्तरं यत्र तदभावे नपुंसकम्" इत्युक्त्या नपुंसकत्वापत्तिः।

यद्वा खट्वायां स्त्रीत्वम्, वृक्षे पुंस्त्वं चासदेव भासते। कथं पुनरसन्नाम लिङ्गं द्रष्टुं शक्यम्? मृगतृष्णावत्। तद्यथा मृगास्तृषिता अपां धाराः पश्यन्ति। न च ताः सन्ति। मृगतृष्णाविषया मरुमरीचिका यथाऽसत्येन जलरूपेण भासते, तथा खट्वावृक्षावसता स्त्रीपुंसत्वेन भासेते। ननु मरीचिदर्शनसादृश्यत्तत्र पूर्वानुभूतं जलं स्मृतिपथमेतीत्युच्यते यदि तदा भाष्यकार आह—"गन्धर्वनगरं यथा" इति। यथा गन्धर्वनगरं दूरतो दृश्यते, उपसृत्य च नोपलभ्यते; तद्वत् खट्वावृक्षयोर्लिङ्गमसद् द्रष्टव्यम्। नहि गन्धर्वनगरमन्तरिक्षे केनचित्कदाचिदप्युपलब्धं येन तत्रापि स्मर्यत इति वक्तुं शक्यम्, अनुभूतस्यैवोद्बोधकवशात् स्मृतिविषयत्वस्य सर्वानुभवसिद्धत्वात्।

सम्प्रति खट्वावृक्षयोः सती एव स्त्रीत्वपुंसत्वे कारणान्तरवशाज्ज्ञानविषयतां नोपयात इति पक्षान्तरमादाय भाष्यकृता विविच्यते—

"आदित्यगतिवत् सन्न" इति। अथवा आदित्यगतिः सत्यपि नोपलभ्यते। तद्वत् खट्वावृक्षयोर्लिङ्गं सदपि नोपलभ्यते। आदित्यगतेः सत्ताऽनुमानादिना सिद्धापि प्रत्यक्षप्रमाणविषयतां नावगाहते, किन्तु देशान्तरप्राप्त्यादिनाऽनुमीयते। तथा खट्वावृक्षयोः सदपि लिङ्गं सूक्ष्मत्वात् प्रत्यक्षप्रमाणेनाशक्यदर्शनम्। बीजगतवटवृक्षवत्। किन्तु शास्त्रीयतत्तत्कार्यरूपहेतुनानुमीयते धूमाद्वह्निरिव।

पक्षान्तरं भाष्ये—"वस्त्रान्तर्हितवच्च तत्" इति। यथा वस्त्रान्तर्हितानि द्रव्याणि न दृश्यन्ते, तद्वत् खट्वावृक्षयोः सदपि लिङ्गं नोपलभ्यते। विषम उपन्यासः। वस्त्रान्तर्हितानि

## शब्दमाश्रित्य व्यवहारपथमागतानां लिङ्गानां निर्णयः

द्रव्याणि वस्त्रापाये उपलभ्यन्ते । खट्वावृक्षयोः पुनर्येऽप्येते रथकारा वाशी ( वसिला ) वृक्षादन ( कुठार )हस्ता मूलात्प्रभृति आ · अग्राद् वृक्षांस्तक्ष्णुवन्ति तेऽपि तयोर्लिङ्गं नोपलभन्ते । केनैतदध्यवसीयते खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत इति ।

षड्भिः प्रकारैः सतां भावानामनुपलब्धिर्भवति । १—अतिसन्निकर्षात्, २—अतिविप्रकर्षात्, ३—मूर्तान्तरव्यवधानात्, ४—तमसावृतत्वात्, ५—इन्द्रियदौर्बल्यात्, ६—अतिप्रमादादिति । अतिसन्निकर्षाद्यथा—स्वचक्षुर्गतस्याञ्जनादेः । अतिविप्रकर्षाद्यथा—उड्डीनस्य शकुनेः । मूर्तान्तरव्यवधानाद्यथा—कुड्यादिव्यवहितस्य सुवर्णादेः । अन्धकारावृतत्वाद्यथा—अन्धकाराक्रान्तस्य घटादेः । इन्द्रियदौर्बल्याद्यथा—तिमिराद्युपघाते सति चक्षुरादेः । अतिप्रमादाद्यथा—प्रमादोऽनवधानता । विषयान्तरासक्तचित्तो हि सन्निकृष्टमप्यर्थं नोपलभते ।

ननु भाष्यकृताऽतः पूर्वम् "आदित्यगतिवत् सन्न" इत्यनेन सौक्ष्म्यात् खट्वावृक्षयोर्लिङ्गं नोपलभ्यते" इत्युक्तम् । तेनानुपलब्धौ सूक्ष्मत्वमपि कारणमभ्युपेतम् । तस्य चात्र परिगणनं न कृतमिति न्यूनतेति चेन्न, सूक्ष्मत्वस्येन्द्रियदौर्बल्येन संगृहीतत्वात् । अत .एव प्रबलेन्द्रिया दिव्यदृशो महर्षयः सूक्ष्ममप्यर्थमुपलभन्ते । ननु समानाभिहारोऽप्यनुपलब्धौ हेतुस्तद्यथा—माषराशौ प्रक्षिप्तो माषः पृथङ्नोपलभ्यते । एवमभिभवोऽपि—तद्यथा सौरीभिर्भाभिरभिभूतानि नक्षत्राणि दिवा नोपलभ्यन्ते । प्रकृते एतयोरप्यनुक्त्या न्यूनतादोषस्तदवस्थ एवेति चेन्न, इन्द्रियदौर्बल्ये एवैनयोरप्यन्तर्भावात् ।

पुनर्भाष्यकृता शङ्कितम्—"केनैतदध्यवसीयते खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत इति ? तयोस्तु तत्कृतं दृष्ट्वा । स्त्रीकृतं टाबादिकं शब्दं दृष्ट्वा स्त्रीत्यध्यवसीयते । पुंस्कृतं शब्दं दृष्ट्वा पुमानिति" इति भाष्यम् । अयं भावः—खट्वारूपोऽर्थः स्त्रीत्वविशिष्टस्तदर्थवकार्यस्य टाबादेः, स्वघटितशब्दवाच्यत्वसम्बन्धेनार्थे दर्शनात्, एवं वृक्षरूपोऽर्थः पुंस्त्वविशिष्टः, 'वृक्षान्' इत्यत्र पुंस्त्वार्थद्योतकनकारादेशरूपकार्यस्य स्वघटितप्रत्ययप्रकृतिवाच्यत्वसंसर्गेणार्थे दर्शनात् । दर्शनञ्चात्र ज्ञानविशेषो न तु चाक्षुषम् । साध्यतावच्छेदकसम्बन्धश्च यदि लिङ्गं गुणस्तदा समवायः । यद्युपाधिरूपं तदा स्वरूपसम्बन्धः । हेतुतावच्छेदकसंसर्गश्च विषयतारूपः । एवमुक्तानुमित्या खट्वावृक्षयोर्लिङ्गं प्रतीतिविषयतामवगाहते । अत्रानुमितौ दृष्टान्तरूपेण भाष्यकृताभिहितम्—"यथा आकाशेन ज्योतिषः । तद्यथा आकाशं दृष्ट्वा ज्योतिरत्रेत्यवगम्यते" इति । अत्राकाशते प्रकाशते इत्याकाशः प्रकाशः । तेन यथा मेघान्तरितं ज्योतिरनुमीयते तथा लिङ्गमनुमीयत इत्याकूतम् ।

अत्र भाष्यम्—"ज्योतिर्निमित्तं ह्याकाशम्। अन्योन्याश्रयत्वे तद्भवति। स्त्रीकृतः शब्दः शब्दकृतञ्च स्त्रीत्वमिति। एतदितरेतराश्रयं भवति। इतरेतराश्रयाणि च कार्य्याणि न प्रकल्पन्ते" इति। अत्र ज्योतिष्प्रकाशयोरन्योन्याश्रयत्वञ्च प्रत्यक्षेण कार्य्यकारणभावावगमात्।

भवतु कार्य्येण कारणानुमानम्। खट्वादिषु तु लिङ्गस्य कदाचिदप्यग्रहणान्न तेन कार्य्यकारणभावः कल्पयितुं शक्यः। अत्र लिङ्गावगमात् टाबादिशब्दप्रयोगः, टाबादिशब्दप्रयोगाच्च लिङ्गावगतिरित्यन्योन्याश्रयः। यदुक्तं पूर्वम्—"आदित्यगतिवत् सदपि नोपलभ्यते" इति, तद्दूषयितुमाह भाष्यकृत्—"प्रत्यक्षेण विरुध्यते। प्रत्यक्षेण सन्नपि स विरुध्यते। य आह खट्वावृक्षयोः सल्लिङ्गं नोपलभ्यत इति। स च स्वेन्द्रियविरोधः कृतो भवति। न च स्वेन्द्रियविरोधिना भवितव्यम्" इति। लिङ्गस्वरूपेण विविक्तो यः खट्वादिविषयस्तन्मात्रविषयकेण लिङ्गाभावनिश्चयकारिणा चाक्षुपप्रत्यक्षेण खट्वादिषु लिङ्गसद्भावो विरुध्यत इति भावः। नहि शक्यते वक्तुं भिक्षुगृहं गजवद् देशत्वाद् गजशालवत् प्रत्यक्षेण चक्षुपेन्द्रियदौर्बल्यान्नोपलभ्यत इति।

लौकिकलिङ्गवत्ताया जडेषु स्वीकारे दोषान्तरमपि तत्रैवोक्तम्—"तटे च सर्वलिङ्गकार्य्याणि दृष्ट्वा तटस्तटी तटमिति कस्तदध्यवसातुमर्हति—इयं स्त्री, अयं पुमान्, इदं नपुंसकमिति" इति। एकस्मिन् द्रव्ये सर्वलिङ्गासम्भवः। स्त्रीपुंसत्वसद्भावे नपुंसकत्वासम्भवः, "तदभावे नपुंसकम्" इत्युक्तेः। तस्मान्न वैयाकरणैः शक्यं लौकिकं लिङ्गमास्थातुम्। अवश्यञ्च कश्चित् स्वकृतान्त आस्थेयः। कोऽसौ कृतान्तः ? संस्त्यानप्रसवौ लिङ्गमास्थेयौ स्वकृतान्तः। किमिदं संस्त्यानप्रसवाविति ? संस्त्याने (संघाते) स्त्यायतेर्ड्रट् स्त्री। सूतेः सप् प्रसवे पुमानितीत्युक्तं भाष्यकृता। अत्र "सूतेः सप्" इति भाष्यस्य षूङ्प्राणिगर्भविमोचने इत्यत औणादिकः सुन्प्रत्ययो ह्रस्वश्च बाहुलकाद् धातोः सस्य पकारादेशश्चेत्यर्थः। तेन पुमान् सिध्यति। उणादौ "पातेर्डुंमसुन्" पुमान् इत्युक्तम्, तदेतद् भाष्यविरुद्धम्।

ननु च "लोकेऽपि स्त्यायतेरेव स्त्री सूतेः सप् प्रसवे पुमान् इति। अधिकरणसाधना लोके स्त्री, स्त्यायति गर्भोऽस्यामिति। इह पुनरुभयं भावसाधनम्। संस्त्यानं स्त्रीप्रवृत्तिश्च पुमान्" इति भाष्यम्। अत्र संस्त्यानं तिरोभावः प्रवृत्तिश्चाविर्भावः। "कस्य पुनः संस्त्यानं स्त्री, प्रवृत्तिर्वा पुमान्? गुणानाम्, केषाम्? शब्दस्पर्शरूपरसगन्धानाम्" इत्युक्तं पतञ्जलिना भगवता। अयं भावः—संस्त्यानं तिरोभावः। प्रवृत्तिराविर्भावः। साम्यावस्था गुणानां स्थितिः। एताश्चावस्थाः शब्दगोचरा एव गुणा सत्त्वरजस्तमांसि। तत्परिणामरूपाः शब्दादयः पञ्च गुणास्तदात्मका एव। तत्संघातरूपञ्च घटादि, न तु तद्व्यतिरिक्तमवयवि द्रव्यमस्तीति सांख्यसिद्धान्तः। सत्त्वादीना-

मनारब्धकार्य्याणां सूक्ष्मावस्थाविशिष्टानामप्रत्यक्षत्वाच्छब्दव्यवहारागोचरत्वाद् भाष्ये तत्परिणामरूपा लोकप्रसिद्धाः शब्दादय उक्ताः। "सर्वाश्च पुनर्मूर्तय एवमात्मिकाः संस्त्यानप्रसवगुणाः शब्दस्पर्शरूपरसगन्धवत्यः। यत्राल्पीयांसो गुणास्तत्राप्यवरतस्त्रयः शब्दो रूपं स्पर्श इति" इति भाष्यम्। नन्वाकाशं शब्दगुणकमेव वायुरपि स्पर्शमात्रैकगुणस्तर्हि "यत्राल्पीयांसो गुणास्तत्राप्यवरतस्त्रयो गुणाः" इत्यनुपपन्नमिति चेन्न, सम्पिण्डितस्वभावानां चक्षुर्गोचराणामेव मूर्त्तिशब्देनात्र विवक्षितत्वात्, वाय्वाकाशयोश्चातथात्वात्। अतः परम् "रसगन्धौ न सर्वत्र, प्रवृत्तिः खल्वपि नित्या। नहीह कश्चिदपि स्वस्मिन्नवतिष्ठते वर्द्धते वा। यावदनेन वर्द्धितव्यमपायेन वा युज्यते। तच्चोभयं सर्वत्र" इति भाष्यम्। "तच्चोभयं सर्वत्र" इत्यस्य सत्त्वादीनां गुणानामाविर्भावतिरोभावरूपः परिणामः प्रवृत्तिपदवाच्यः सर्वत्र पदार्थमात्रे इत्यर्थः। पुरुषो यद्यप्यपरिणामी तथापि भोक्तृत्वात् प्रकृतिधर्मापन्नत्वेन भानात् यत्किञ्चिद्धर्मिनिष्ठात्यन्ताभावाप्रतियोगित्वरूपकेवलान्वयित्वस्य पुंस्त्वादीनां स्वीकारेण पुरुषस्य निर्धर्मकतया केवलान्वयित्वाक्षतेश्च। शब्दादिसंघातरूपाश्च सर्वा मूर्तयः प्रतिक्षणपरिणामस्वभावाः। एवं शब्दादय आकाशादयो घटादयश्च।

ननु "चादयोऽसत्त्वे" (१-४-५७) इति सूत्रेणाद्रव्यार्थाश्चादय इत्युच्यते। अत्र सत्त्वपदेन लिङ्गसंख्यान्वितं द्रव्यमुच्यते। लिङ्गसंख्याऽनन्वितार्थकाश्च चादयो निपाता इति लिङ्गस्योक्तकेवलान्वयित्वं नोपपद्यत इति चेन्न, निपातानां लिङ्गसंख्यानन्वितार्थवाचकत्वेऽपि तदर्थे लिङ्गसंख्याऽभावस्य वक्तुमशक्यत्वात्। अत एव—

सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम्॥

इति "तद्धितश्चासर्वविभक्तिः" इति सूत्रे भाष्योक्तिः संगच्छते। लिङ्गत्रयविशिष्टेऽप्यर्थेऽव्ययरूपं न भिद्यत इति तदर्थः। तदुक्तं हरिणा—

आविर्भावस्तिरोभावः स्थितिश्चेत्यनपायिनः।
धर्मा मूर्तिषु सर्वासु लिङ्गत्वेनानुदर्शिताः॥
सर्वमूर्त्यात्मभूतानां शब्दादीनां गणे गणे।
त्रयः सत्त्वादिधर्मास्ते सर्वत्र समवस्थिताः॥
क्वथितोदकवच्चैषामनवस्थितिवृत्तिता।
अनवस्थितभावानां भाष्य एवोपवर्णिताः॥

रूपस्य चात्ममात्राणां शुक्लादीनां प्रतिक्षणम् ।
काश्चित् प्रलीयते काश्चित् कथञ्चिदभिवर्धते ॥

प्रवृत्तिमन्तः सर्वे हि तिसृभिश्च प्रवृत्तिभिः ।
सततं न वियुज्यन्ते वाचश्चैवात्र सम्भवः ॥

अचेतनेषु संक्रान्तं चैतन्यमिव दृश्यते ।
प्रतिबिम्बकधर्मेण यत्तद्वाचो निबन्धनम् ।
पश्चात् प्रवृत्तिधर्मार्थश्चितिरूपेण गृह्यते ।
अनुयातीव सोऽन्येषां प्रवृत्तिर्विष्वगाश्रया ॥
सामान्यमपि गोत्वादिव्यक्तेरव्यतिरेकतः ।
प्रवृत्तिधर्मं तद्द्वारा शशशृङ्गादिवाक्षु तु ॥
तस्मादुक्तपदार्थस्य सम्भवाल्लिङ्गयोगिता ।
प्रवृत्तेरपि विद्यन्ते तिस्रो ह्येताः प्रवृत्तयः ॥
पुंनपुंसकता स्त्रीत्वं तेन स्यादन्यलिङ्गता । इति ।

तदेवं सर्वपदार्थव्यापिन्य उपचयापचयान्तरालावस्थास्त्रीणि लिङ्गानि । एवं च नक्षत्रे तारकास्तिष्यः कुमार्य्यर्थो वस्तु इत्येकस्याप्यर्थस्य नानालिङ्गयोग उपपद्यते । आविर्भावादित्रयस्याप्येकस्मिन्नर्थे सर्वदा सम्भवात् । शशविषाणादावप्युत्तरपदार्थसद्भावात्तद्द्वारको लिङ्गयोगः । बौद्धशशविषाणमादाय वा लिङ्गवत्त्वम् । एवमेव वन्ध्यासुतादावपि बोध्यम् ।

न चैवं गुणानामुपचयापचयस्थितिस्वरूपाण्येव यदि लिङ्गानि तदा तेषां सर्वत्र सत्त्वात् सर्वेषां शब्दानां सर्वलिङ्गताप्रसङ्ग इति वाच्यम्, यदर्थवाचकः शब्दस्तदर्थे यावन्ति लिङ्गानि तावल्लिङ्गभाक् शब्द इति नियमाभावेन यल्लिङ्गं स्वस्वशक्तिस्वभावादाह—'शब्दस्तेन लिङ्गेन तदर्थे सता भवितव्यम्' इत्येव नियमात् । तथा च सर्वत्र सर्वलिङ्गसत्त्वेऽपि शब्दशक्तिस्वभावात् कश्चिदेकमेव लिङ्गं कश्चिल्लिङ्गद्वयं कश्चिल्लिङ्गत्रयं प्रतिपादयतीति न सर्वेषां सर्वलिङ्गताप्रसङ्गः । अत एव कुमार्य्यादावियं व्यक्तिः, अयं पदार्थः, इदं वस्तु इति प्रयोगदर्शनेन लिङ्गत्रयसत्तायाः सत्त्वेऽपि कुमारीशब्दः स्त्रीत्वमेवाभिधत्ते नान्यत् । तदुक्तं भाष्यकृता—"यद्युभयं सर्वत्र कुतो व्यवस्था ? विवक्षातः । संस्त्यान( अपचय )विवक्षायां स्त्री । प्रसव( उपचय )विवक्षायां पुमान्, उभय( स्थिति )विवक्षायां नपुंसकमिति । यथा तक्षार्थी तक्षा युवा कृष्ण इत्यत्र तक्षादि-

### शब्दमाश्रित्य व्यवहारपथमागतानां लिङ्गानां निर्णयः

शब्दानामेकार्थपर्यवसायिनामपि व्यवस्थित एवार्थोऽभिधीयते, तथा लिङ्गेष्वपि द्रष्टव्यम्। तदुक्तं हरिणा—

सन्निधाने पदार्थानां किञ्चिदेव प्रवर्तकम्।
यथा तक्षादिशब्दानां लिङ्गेषु नियमस्तथा ॥ इति।

ननूपचीयते कुमारीत्यत्रोपचयस्यैवाविर्भावेन 'कुमारी' इति स्त्रीत्वमनुपपन्नमिति चेन्न, कुमारीशब्दः स्वमहिम्नाऽपचयमेवाह, शब्दान्तरयोगात्तु धर्मान्तरस्यापचयस्य प्रतीतेः। एवं क्षीयते वृक्षः क्षीयते ज्ञानमित्यादावपि बोध्यम्।

ननु लिङ्गत्रयस्य व्यापित्वेऽपि प्रत्यक्षप्रमाणागोचरतया तत्तच्छब्दे तत्तल्लिङ्गप्रतिपादनशक्तिरप्यप्रत्यक्षैवेति तत्तल्लिङ्गबोधनमप्यसम्भवीति चेन्न, शिष्टलोककृतलिङ्गानुशासनत एव तत्तच्छब्दनिष्ठलिङ्गनिरूपितशक्तेरप्यवगन्तव्यत्वात्। तदुक्तं भाष्यकृता—"तस्योक्तौ वचने लोकतो नामैतद्भवति स्त्री पुमान् नपुंसकमिति" इति, "लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्य" इति, "एकार्थे लिङ्गान्यत्वाद् दृष्टं लिङ्गान्यत्वमवयवान्यत्वाच्च" इति च। एकस्मिन्नेवार्थे संख्यानादिसद्भावात् पुष्यः तारका नक्षत्रमिति। अवयवान्यत्वात् कुटी कुटीरः।

रेफस्यावयवस्योपजनने लिङ्गभेदो दृष्टः। स्त्रीत्वं स्त्रीता, पुंस्त्वं पुंस्ता इत्यादिशिष्टप्रयोगदर्शनात् संख्यानादेरपि प्रवृत्तिलक्षणलिङ्गयोगः। किञ्च, "गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति। तद्यथा—शुक्लं वस्त्रम्, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बला इति। यदसौ द्रव्यं श्रितो भवति गुणस्तस्य यल्लिङ्गं वचनं च तद्गुणस्यापि भवति। एवमिहापि यददो द्रव्यं श्रितं भवति स्त्रीत्वं गुणस्तस्य यल्लिङ्गं वचनं च तत्स्त्रीत्वस्यापि भविष्यति" इति भाष्येण स्त्रीत्वादीनां गुणत्वसिद्धया आश्रयतो लिङ्गवचनं न्यायादनपेतमेव।

नागेशभट्टा अपि प्रवृत्तिविषये स्वाराध्यभाष्यकृदभिप्रेतमेवाद्रियन्ते। "स्तनकेशवती स्त्री स्याल्लोमशः पुरुषः स्मृतः" इत्यादि लौकिकलिङ्गसम्भवे तद्विशिष्टे एव लौकिकं शास्त्रीयं च कार्य्यम्, प्रत्यक्षप्रमाणस्य बलवत्त्वेन तत्त्यागे मानाभावात्। अत एव "पशुना यजेत" इत्यनेन लौकिकलिङ्गसमानाधिकरणशास्त्रीयस्यैव शब्दसंस्कारकत्वेन न केवलशास्त्रीयपुंस्त्वविशिष्टया स्त्रिया यागः।

वृत्तिकारास्तु हालिकपर्य्यन्तानां लौकिकानां सत्त्वादिगुणानामुपचयापचयस्थितिरूपलिङ्गस्य प्रतिपत्तेरभावाल्लौकिकानुगुणं पक्षं दर्शयन्ति—तथा हि "स्त्रियाम्" इत्युच्यते केयं स्त्री नाम? सामान्यविशेषाः स्त्रीत्वादयो गोत्वादय इव बहुप्रकारा व्यक्तयः। क्वचिदाश्रयविशेषाभावाद्गु-

पदेशगम्या एव भवन्ति, यथा ब्राह्मणत्वादय इत्याहुः। अयं भावः—सामान्यविशेषाः ( जातिविशेषाः ) स्त्रीत्वादयः। तदुक्तं हरिणा—

तिस्रो जातय एवैताः केषाञ्चित् समवस्थिताः।
अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः॥
हस्तिन्यां वडवायाञ्च स्त्रीत्वबुद्धेः समन्वयः।
अतस्तां जातिमिच्छन्ति द्रव्यादिसमवायिनीम्॥ इति।

नन्वेषां त्रयाणामपि सामान्यविशेषाणां सर्वार्थेषु सद्भावोऽभ्युपगन्तव्यः, न तु गोत्वादिवत् कतिपयेष्वेवार्थेषु। अन्यथा एकस्मिन्नेवार्थे पदार्थव्यक्तिवस्त्वादिशब्दानां भिन्नलिङ्गानां सर्वानुभूतानां प्रतीत्यनुपपत्तिरिति चेन्न, व्यज्यन्ते जातिविशेषाः स्त्रीत्वादय आभिरिति व्यक्तय आश्रयाः, पुंस्त्वादिजातिव्यञ्जकानामाश्रयाणां नानाविधत्वात् कश्चिदाश्रयः कस्यचित्सामान्यविशेषस्य व्यञ्जको न सर्वः सर्वस्येत्यभ्युपगमात्। तत्र चेतनेषु स्तनादिमती व्यक्तिः स्त्रीत्वस्याभिव्यञ्जिका, लोमशत्वादिमती पुंस्त्वस्य, उभयव्यञ्जना नपुंसकत्वस्य। अचेतनेषु कथम्? नहि तत्र किञ्चिल्लिङ्गं व्यज्यते। तथा चेतनेऽप्येकस्मिन् अर्थव्यक्तिवस्त्वादिशब्दानां भिन्नलिङ्गानामनुपपत्तिः, पुंलिङ्गस्य दारशब्दस्य स्त्रियामनुपत्तिरिति चेन्न, क्वचिदाश्रयविशेषाभावादुपदेशव्यङ्ग्या एव ता जातयो ब्राह्मणत्वादिवत्, ब्राह्मणक्षत्रियादिव्यक्तीनामत्यन्तसादृश्यादुपदेशादेव ब्राह्मणत्वादीनां यथाभिव्यक्तिः। नहि खलु पुरोऽवस्थितयोरपि ब्राह्मणक्षत्रिययोरुपदेशात् प्राक् क्षत्रियोऽयं ब्राह्मणोऽयमिति प्रत्यय उदेति। शशविषाणादावप्युत्तरपदार्थद्वारकः सामान्ययोगः। ननु स्त्रीत्वं स्त्रीता, पुंस्त्वं पुंस्ता जातिः। तत्र कथं लिङ्गरूपजातिप्रतीतिरिति चेन्न, वैयाकरणनये गोत्वादौ सत्तासामान्यस्येव सामान्येऽपि सामान्यसद्भावस्वीकारात्। नह्यस्माकं वैशेषिकाणामिव निःसामान्यानि सामान्यानीति मतम्।

यद्यपि मीमांसकैः "पशुना यजेत" इत्यादिवाक्यमुपजीव्य पुंस्त्वं विवक्षितं न वेत्युपक्रम्य "पशुना यजेत" इति वाक्यान्तर्गतः पशुशब्दो नाभावेन पुंस्त्वबोधनात् स्त्रियां नास्तीति हेतोर्न छाग्यादीन् यज्ञाङ्गत्वेन प्रयोजयति। अतो लौकिकपुंस्त्वविशिष्टपशुकरणकयागस्यैवेष्टसाधनत्वं नान्यस्य। न च नित्यपुंलिङ्गपदार्थशब्दो यथा लौकिकलिङ्गानादरेण पुंस्त्वस्त्रीत्वनपुंसकत्वान्यतमधर्मावच्छिन्नबोधकस्तथा नित्यपुंलिङ्गः पशुशब्दोऽपि लौकिकलिङ्गानादरेण स्त्रीत्वविशिष्टं पशुमपि बोधयेदिति छाग्या अपि यागाङ्गत्वं स्यादिति वाच्यम्, सर्वार्थाभिधायिनित्यलिङ्गकशब्दस्यैव लौकिकलिङ्गानादरेण शिष्टप्रयोगदर्शनादुक्तदोषाप्रसङ्गात्।

## शब्दमाश्रित्य व्यवहारपथमागतानां लिङ्गानां निर्णयः

वस्तुतस्तु "पश्वा न तायुं गुहा चरन्तम्" ( ऋग्वेदे १ म० १२ अनुवा० १५ सू० ) इति वेदे स्त्रियां प्रयोगदर्शनेन पशुशब्दस्य नित्यपुंस्त्वं दुर्निरूप्यम्। "छागो वा मन्त्रवर्णात्" ( मी० ६ अ० ८ पा० ३१ सू० ) इत्यत्रापि लिङ्गविवक्षादर्शनाल्लिङ्गस्य नामार्थत्वं मीमांसकाभिप्रेतमित्यत्र नास्ति विचिकित्सा।

"व्यक्त्याकृतिजातयः पदार्थः" इति सूत्रयता भगवता गौतमेन, न्यायसूत्रभाष्यकृता वात्स्यायनेन, वैशेषिकसूत्रकृता महर्षिणा कणादेन, वैशेषिकसूत्रोपस्कारकृता श्रीशङ्करमिश्रेण च सर्वभाषाप्रसिद्धपुंस्त्वादिलिङ्गविषयः सर्वथोपेक्षितः। पदार्थमात्रविचारपराणामेषां तदुपेक्षायां कारणमन्वेषणविषयतामाश्रयति। गौतमसूत्रे जातिपदस्य धर्ममात्रपरत्वमपि न पुंस्त्वादिविषयक-तत्त्वातत्त्वविवेकपद्धतित्रुटिं परिमार्ष्टि।

किञ्च, तन्मते पुंस्त्वादीनां कुत्रान्तर्भाव इत्यपि दुर्वचम्। यद्यपि नव्यनैयायिकशिरोमणिना गदाधरभट्टाचार्य्येण लिङ्गनिरूपणप्रकरणे "टाबादयः क्वचित् स्त्रीत्वं प्रकृत्यर्थविशेषणतया बोधयन्ति। अजा ब्राह्मणी गौरीत्यादौ स्त्रीत्वञ्च योनिमत्त्वम्। न च स्त्रीपरपदात् साधुत्वार्थष्टाबादिर्न तु स्त्रीत्वं तदर्थः। क्वचित् स्त्रीत्वबोधश्च स्त्रीप्रत्ययप्रकृतितात्पर्य्यविषयत्वरूपलिङ्गज एवेति वाच्यम्, खट्वादौ व्यभिचारेण तादृशहेतोः स्त्रीत्वासाधकत्वात्। प्राणित्वेन विशेषणत्वेऽपि "इन्द्रो देवता" इत्यादौ व्यभिचारात्।

वस्तुतस्तु अजवत्यपि देशेऽजा नास्तीत्यादिप्रयोगदर्शनात् स्त्रीत्वस्य नञर्थान्वयितावच्छेदक-तया भानमावश्यकम्, अन्यथा पुंसाधारणजातिविशेषावच्छिन्नाभावस्य बाधेन तादृशप्रयोगस्य प्रामाण्यानुपपत्तेः। न च प्रातिपदिकार्थ एव स्त्रीत्वं द्योतकाश्च स्त्रीप्रत्यया इति वाच्यम्; लिङ्गस्य प्रातिपदिकार्थत्वमावश्यकमेव, नात्र ब्राह्मणोऽपि तु ब्राह्मणीत्यादौ पुंस्त्वबोधकपदान्तराभावेन तद्-बोधानुपपत्तेः। ब्राह्मणादिपदाच्च जात्यादेर्द्रव्यस्य च भानं नियतमेव। लिङ्गभानं तात्पर्य्ययोग्यता-धीनं क्वाचित्कम्, ब्राह्मणीत्यादौ पुंस्त्वाद्यबोधादिति वाच्यम्, उक्तयुक्त्या पुंस्त्वस्य प्रातिपदि-कार्थत्वेऽप्यनन्तानां प्रातिपदिकपदानां स्त्रीत्वार्थकत्वे गौरवाल्लाघवेनाल्पीयसां स्त्रीप्रत्ययानां स्त्रीत्वार्थकत्वकल्पनाया एवौचित्यात्। योनिमत्त्वरूपस्त्रीत्वस्य खट्वाऽश्वीदेवतापदे च स्त्रीप्रत्यया न बोधकाः, किन्तु साधुत्वसम्पादका एव; तत्र योनिमत्त्वरूपस्त्रीत्वस्यायोग्यतयाऽनन्वयात्; एतन्मते स्त्रीत्वस्य प्रत्ययार्थत्वे स्त्रीप्रत्ययरहिते गीर्वाणादौ शब्दे न भानं लिङ्गस्य, नामजन्योपस्थितेरभावाद्योनिमत्त्वरूपलिङ्गस्याभावाच्च। "यूस्त्र्याख्यौ नदी" इत्यादौ स्त्र्याख्यपदं

स्त्रीलिङ्गशब्दपरम्। तेनाटव्यादिशब्दानां स्त्रीत्वविशिष्टाबोधकत्वेऽपि न नदीसंज्ञानुपपत्तिः। न चैवं सेनान्ये स्त्रियै इत्यादावपि नदीसंज्ञा स्यात्, सेनान्यादिशब्दस्यात्र विशेष्यनिघ्नतया स्त्रीत्वादिति वाच्यम्, प्रयोगानुसारेण विशेष्यानधीनाया स्त्रीलिङ्गताया ग्रहणात्। तथा च "स्वमोर्नपुंसकात्", "तस्माच्छसो नः पुंसि" इत्यादौ का गतिरिति त एव प्रष्टव्याः। लिङ्गस्य शब्दगतत्वस्वीकारे "पशुना यजेत" इत्यादौ स्त्रिया यागो दुर्वारः स्यात्। किञ्च, शब्दगतलिङ्गस्य स्वरूपं दुर्निरूपं स्यात्। तस्माद्भाष्योक्तं गुणानामुपचयापचयस्थितिरूपं केवलान्वयि पुंस्त्वस्त्रीत्वनपुंसकत्वात्मकं लिङ्गं सर्वैर्ग्राह्यम्।

व्याकरणभाष्यं वाक्यपदीयञ्चापहाय कुत्रापि लिङ्गस्वरूपनिर्णयो नोपलभ्येतेति मन्ये।

लिङ्गत्रयं जगद्व्याप्तं ज्योतिर्लिङ्गसमं मतम्।
तद्विचारः शुभं कुर्य्यात् सुरवाचो जगत्त्रये॥

इति शम्॥



# मीमांसायामपवर्गस्वरूपं तत्प्राप्त्युपायश्च

श्रीसभापत्युपाध्यायः, संमानितप्राध्यापकः, वा० सं० वि० वि० वाराणसी।

नानाविधवासनाधीनतया नीलपीतादिविलक्षणरूपेण च संसरतो ज्ञानप्रवाहस्य निःशेष-संस्कारोच्छेदेनानेकविधविषयवैचित्र्यं परित्यज्य केवलसंविन्मात्रेणावस्थानमपवर्ग इति दीपसन्तान-रूपस्य ज्ञानप्रवाहस्योपरतिरूपोपवर्ग इति वेति निखिलदुःखध्वंसपूर्वकं निरतिशयानन्दस्फुरणं मोक्ष इति वेदान्तिनः। साक्षात्क्रियमाणं सुखं वाऽपवर्ग इत्येत्सर्वमपि बाह्यार्थाभाववादिनये एव। नैयायिकास्तु—"प्रवृत्तिदोषजनितोऽर्थः फलम्" (न्याय० १ अ० १ आ० २० सू०)। सुखदुःखसंवेदनं फलम्। सुखविपाकं दुःखविपाकं च कर्म। तत्पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु जायत इति देहादिकमपि गौणं फलम्। तदेतत्फलमुपात्तमुपात्तं हेयम्, त्यक्तं त्यक्तमुपादेयमिति हानोपादानयोर्निष्ठा समाप्तिर्नास्ति। एवं फलस्य हानोपादानस्रोतसोह्यते लोकः।

"बाधनालक्षणं दुःखम्" (न्याय० १ अ० १ आ० २१ सू०) बाधना पीडा, तयानुषक्तं दुःखजनकमिति यावत्। दुःखसाहित्यानुवर्तमानं निखिलमेव शरीरादिकं दुःखजनकत्वाद् दुःखमित्यु-च्यते। सोऽयं दुःखी सर्वं दुःखमिति जानन् दुःखं जिहासुर्जन्मनि दुःखदर्शी संसारान्निर्विद्यते। निर्विण्णः सन् विरज्यते, विरक्तः सन् मुच्यते, अपवर्गरूपं फलं लभते। तथा च संसारे सत्यपि कियति सुखे अपवर्गसाधनीभूतनिर्वेदस्य सिद्धये सर्वस्य दुःखमयत्वमनुभूयते। तदुक्तं पतञ्जलिना—"परिणामतापसंस्कारदुःखैर्गुणवृत्तिविरोधाच्च दुःखमेव सर्वं विवेकिनः" (योगद० २ साधनपा०, १५ सू०) इति।

यस्यामवस्थायामुक्तयोः फलहानोपादानयोः पर्य्यवसानं साऽवस्थाऽपवर्ग इत्यभिधीयते। तदुक्तम्—"तदत्यन्तविमोक्षोऽपवर्गः" (न्याय० १ अ० १ आ० २२ सू०) इति। तेन दुःखेन जन्मनाऽत्यन्तविमुक्तिरपवर्गः। कथम्? उपात्तस्य जन्मनो हानमन्यस्य चानुपादानम्। जन्मनिवृत्ति-रूपामपवर्गपर्य्यन्तां विनाशरहितामपवर्गं वेदयन्तेऽपवर्गविदः। तदेव पदम् अभयमजरममृत्यु-पदं ब्रह्मेति वेदान्तिभिर्ब्रह्मेत्युच्यते, तदेव दुःखनिवृत्त्या क्षेमप्राप्तिरित्युच्यते। नित्यं सुखमात्मनो महत्त्ववन्मोक्षे व्यज्यते, तेनाभिव्यक्तेनात्यन्तं विमुक्तः सुखीभवतीति केचिद् (वेदान्तिनः)

मन्यन्ते। तेषां प्रमाणाभावादनुपपत्तिः। न प्रत्यक्षं नानुमानं नागमो वा विद्यते। नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यते" इति।

ननु नित्यस्य स्वरूपभूतसुखस्याभिव्यक्तिः संवेदनं ज्ञानमेवाभिव्यक्तिपदार्थः। ज्ञानञ्च मुक्तस्य नानुपपन्नं ज्ञानस्वरूपत्वात्तस्येति चेन्न, यतस्तदुत्पद्यते तस्य हेतोरभावात्। सुखवन्नित्यमिति चेत्, संसारस्थस्य मुक्तेनाविशेषः। यथा मुक्तः सुखेन तत्संवेदनेन नित्येन चोपपन्नस्तथा संसारस्थोऽपि प्रसज्यत इत्युभयस्य नित्यत्वात्। तथा च संसारस्य मुक्तेनाविशेषः। अभ्यनुज्ञाने च धर्माधर्मफलेन साहचर्य्यं यौगपद्यं गृह्येत। यदिदमुत्पत्तिस्थानेषु धर्माधर्मफलं सुखं दुःखं वा संवेद्यते पर्य्यायेण, तस्य च नित्यसंवेदनस्य च सहभावः = यौगपद्यं गृह्येत। संसारावस्थायामपि नित्यसुखज्ञानस्य स्वीकारे सांसारिकेण धर्माधर्मफलेन सुखदुःखादिना नित्यसुखस्य यौगपद्यं स्यात्। न च यौगपद्यमुपलभ्यत इति प्रत्यक्षविरोधः, इति न नित्यसुखज्ञानोपपत्तिः। संसारावस्थायां तादृशसुखस्याभावो नास्ति, तादृशसुखज्ञानस्याप्यभावो नास्ति, उभयस्य = तादृशसुख-तज्ज्ञानयोर्नित्यत्वात्। तथा च संसारावस्थायामपि मोक्षसुखानुभवः प्राप्तो न चोपलभ्यत इति न नित्यसुखज्ञानोपपत्तिरित्यर्थः। न च नित्यसुखस्य ज्ञानं न नित्यम्, येन संसारावस्थायामापद्येतेति वाच्यम्, अनित्यत्वे नित्यसुखज्ञानस्य हेतोरपि वाच्यत्वात्। यतस्तज्ज्ञानमुत्पद्यते स हेतुर्वाच्यः, अनित्यस्य कारणजन्यत्वनियमात्। मोक्षावस्थायाञ्च तादृशकारणं नोपपद्यत इत्यपवर्गे न नित्यसुखज्ञानोपपत्तिः। नन्वात्ममनःसंयोग एव नित्यसुखज्ञानस्य हेतुरिति न ज्ञानोत्पत्तिरनुपपन्नेति चेन्न, आत्ममनःसंयोगस्य विषयसांनिध्यादिनिमित्तान्तरसहितस्यैव ज्ञानहेतुत्वस्य दर्शनात्। नैव तस्य स्वातन्त्र्यम्। अन्यथा आत्ममनःसंयोगस्य संसारावस्थायामपि सत्त्वात्तदानीमपि नित्यसुखज्ञानमापद्येत। मोक्षावस्थायाञ्च न निमित्तान्तरं सम्भवतीति न नित्यस्यापि सुखस्य ज्ञानं सम्भवति। यदि धर्मो निमित्तान्तरम्, तथा च धर्मसहित आत्ममनःसंयोगो मोक्षावस्थायां नित्यसुखज्ञानस्य कारणमिति चेन्न, तदानीं धर्मस्याप्युत्पादकहेतोर्वाच्यत्वात् तादृशधर्मस्यापि कारणं वक्तव्यम्। येन मोक्षावस्थायां स धर्म उत्पद्यत इति वक्तव्यम्। न चापवर्गावस्थायां धर्मकारणं सम्भवति।

ननु न कर्मजन्यो धर्म आत्ममनःसंयोगस्य सहकारी, येन तस्य हेतुवचनमापद्येत। किन्तु मोक्षप्रयोजकीभूतो य आत्मसाक्षात्कारस्तत्कारणीभूतो यो योगजसमाधिस्तज्जन्यो धर्मो मोक्षावस्थायामपि वर्तत एव, तस्याक्षयत्वादिति तादृशो योगसमाधिजो धर्म एवात्ममनःसंयोगस्य सहकारिकारणमित्यात्ममनःसंयोगेन नित्यसुखज्ञानं मोक्षदशायामप्युपपन्नमेवेति चेन्न, कार्यावसायविरोधात्। तदुक्तम्—"योगसमाधिजस्य कार्यावसायविरोधात् प्रलये संवेदननिवृत्तिः" इति।

## मीमांसायामपवर्गस्वरूपं तत्प्राप्त्युपायश्च

कार्यस्य प्रलये न किमपि जन्यं स्थातुं शक्नोतीति प्रलयकाले योगजसमाधिजस्यापि धर्मस्य प्रक्षये जाते नित्यसुखसंवेदनस्यानिवृत्तिरिति प्रलयकाले नित्यसुखस्य ज्ञानं नोत्पद्येत ।

ननु सहकारिभूतस्य योगसमाधिजस्य धर्मस्य प्रलयकाले परिक्षये सति नित्यसुखसंवेदनं मा भूत् । नैतावता नित्यसुखस्याभावः प्राप्नोतीति चेन्न, एवं हि नित्यसुखस्यासंवेदने नित्यसुखस्याविद्यमानेनाविशेषात् । संवेदनाभावो विद्यमानस्यापि भवत्यविद्यमानस्यापि । तत्र विशिष्टे विद्यमानस्यैव नित्यसुखस्य संवेदनाभावोऽयमिति विशेषपक्षेऽनुमानं न सम्भवति, अविद्यमानस्यापि नित्यसुखस्य संवेदनाभावः प्राप्तस्तथा च सुखस्याविद्यमानत्वेनानित्यत्वं प्राप्तं तादृशानित्यसुखस्यापवर्गदशायां संवेदनस्वीकारे मुक्तस्य बद्धतुल्यत्वं स्यात् । किञ्चाविद्यमानस्य सुखस्यासंवेदनपक्षे उक्तस्यापवर्गकालिकसुखस्याभावः सिद्ध इति दुःखप्रागभावासमानकालिकदुःखध्वंस एवापवर्ग इति सिद्धम् ।

ननु सहकारीभूतस्योक्तयोगसमाधिजधर्मस्य नित्यत्वे प्रलयकालेऽपि नित्यसुखसंवेदनमुपपद्येतेति चेन्न, उक्तयोगसमाधिजधर्मस्याविनाशित्वप्रयोजकानुमानाभावात् । प्रत्युत तादृशधर्मस्योत्पत्तिधर्मकत्वात् कार्यत्वावच्छिन्नस्य सर्वस्य विनाशित्वे एवानुमितिविषयत्वम् । तद्धर्मस्य योगजसमाधिजन्यत्वेन कार्यत्वादविनाशित्वं दुर्वचम् । तथा च तस्य धर्मस्यापवर्गकाले विनाशावश्यम्भावान्न तत्साहाय्येन मुक्तस्य नित्यसुखसंवेदनमुपपद्यते । यस्य मते मोक्षावस्थायां नित्यसुखसंवेदनस्य विनाशो नास्ति, तेन संवेदनहेतोरपि नित्यत्वं वाच्यमिति तादृशं सुखसंवेदनं मुक्तवद् बद्धस्यापि स्यादेव, नित्यत्वात्प्रतिबन्धकाभावाच्च । सुखमपि नित्यं तत्संवेदनमपि नित्यं तत्कारणमपि नित्यमिति तादृशं सुखसंवेदनं मुक्तवद् बद्धस्यापि दुर्निवारं स्यात् । अतो न मुक्तस्य नित्यसुखसंवेदनमुपपद्यते ।

ननु बद्धानां शरीरादिसम्बन्धरूपप्रतिबन्धकसत्त्वान्न तादृशापत्तिः सम्भवतीति चेन्न, शरीरादीनामुपभोगसाधनत्वेन नित्यसुखसंवेदनप्रतिबन्धकत्वासम्भवात् । नित्यसुखसंवेदनञ्च भोग एव । भोगसाधनानां शरीरादीनां भोगप्रबन्धकत्वं सर्वथाऽनुपपन्नम् । तदुक्तम्—"शरीरादिसम्बन्धः प्रतिबन्धहेतुरिति चेन्न, शरीरादीनामुपभोगार्थत्वाद् विपर्ययस्य चानुमानात्" इति ।

ननु प्रवृत्तेरिष्टाधिगमार्थत्वस्य प्रसिद्धत्वाद् यदि मुक्तस्य नित्यसुखसंवेदनरूपस्येष्टस्य प्राप्तिर्न स्यात्, तदा मोक्षसाधनेषु प्रवृत्तिर्न स्यात् । भवति च प्रवृत्तिरिति मुक्तस्य नित्यसुखसंवेदनरूपस्येष्टस्य प्राप्तिरनुमीयत इति चेन्न, मोक्षसाधनेषु प्रवृत्तेरनिष्टविनाशार्थत्वात् । अनिष्टनिवारणार्थमपि

प्रवृत्तेर्दृष्टत्वात्। तथा च संसारदुःखलक्षणानिष्टस्य निवृत्त्यर्थमेव प्रवृत्तिर्मोक्षसाधनेष्विति न तादृशप्रवृत्त्या नित्यसुखसंवेदनलाभः। तदुक्तम्—"इष्टाधिगमनार्था प्रवृत्तिरिति चेन्न, अनिष्टोपरमार्थत्वात्" इति।

यथा दृष्टमनित्यसुखं परित्यज्य नित्यसुखं कामयते एवं देहेन्द्रियबुद्धीरनित्या दृष्टा अतिक्रम्य मुक्तस्य नित्या देहेन्द्रियबुद्धयः कल्पयितव्याः, एवं मुक्तस्य देहादिमत्त्वस्वीकारे ऐकात्म्यमद्वैतं न सम्भवति, नित्यदेहादिभिरेव सद्वितीयत्वापत्तेः। ननु "स स्वाराड् भवति" इत्यागमेन मुक्तस्य सुखवत्त्वमुच्यत इति मुक्तस्य सुखवत्त्वं प्रामाणिकमेवेति चेन्न, मुक्तस्य सुखबोधके वाक्ये सत्यपि विरोधाभावात्। तादृशागमेन मोक्षावस्थायामात्यन्तिकस्य दुःखाभावस्य बोधनार्थमेव मुक्तस्य सुखवचनम्। लोकेऽपि दुःखाभावे सुखवचनमुपलभ्यते। यथा भारापगमे सति सुखी संवृत्तोऽहमिति।

मुक्तस्य दुःखनिवृत्तिमात्रकथने दुःखाभाव आत्यन्तिको न सिध्येदित्यात्यन्तिकस्य दुःखाभावस्य बोधनार्थमेवागमेन सुखोक्तिरिति न सुखाभावे तादृशागमविरोधः। तदुक्तम्—"आत्यन्तिके च संसारदुःखाभावे सुखवचनादागमेऽपि सत्यविरोधः" इति। वेदान्तिना हि मोक्षावस्थायां प्राप्स्यमानस्य नित्यसुखस्य रागेणैव मोक्षसाधनेषु प्रवृत्तिर्वाच्या। तत्र मुमुक्षोर्नित्यसुखविषयकरागस्याप्रहाणे मोक्षाधिगमाभावः प्राप्तः, रागस्य बन्धनरूपत्वात्। बन्धने सति मुक्त इति रिक्तं वचः।

ननु मोक्षसाधनेषु नित्यसुखरागेण प्रवृत्तस्यापि पुंसो मोक्षसाधनानुष्ठानमाहात्म्यादस्य नित्यसुखरागोऽपि पश्चात् प्रहीयत इति नित्यसुखरागस्य प्रहाणे न मोक्षानुपपत्तिः। यद्येवं मुमुक्षोर्नित्यसुखरागो नष्टस्तदा मुक्तस्य नित्यं सुखं भवति किं वा न भवतीति वक्तव्यम्। तत्रास्य वेदान्तिनो मते नित्यं सुखं भवति न वा भवतीत्युभयोः पक्षयोर्मोक्षाधिगमो नोपपद्यते। यतो नित्यसुखाभिव्यक्तिपक्षे पूर्वं दोषाः प्रदर्शिता एवेति मोक्षानुपपत्तिः, नित्यसुखाभिव्यक्त्यभावपक्षे तु नित्यसुखरहितस्य मोक्षत्वं न स्वीक्रियते वेदान्तिनेति मोक्षानुपपत्तिरिति नास्योभयोः पक्षयोर्नित्यं सुखं भवतु मा वा उभयोरपि पक्षयोर्न मोक्षाधिगम उपपद्यत इति दुःखप्रागभावासमानाधिकरणदुःखध्वंस एव मोक्षः, न तदा नित्यसुखमिति गौतममतानुयायिनो वात्स्यायनाचार्याः।

वैशेषिका अपवर्गविषयेऽल्पतमवाचो दृश्यन्ते। प्रायो गौतमाश्रितं पन्थानमेव सूक्ष्मतयाऽवनयन्ति। तथा हि—धर्माधर्मयोः फलं प्रेत्यभावमाहुः। "तत्संयोगो विभागः" (वैशे० द० ६

अ० २ आ० १५ सू० ) । ताभ्याम् = धर्माधर्माभ्यां जनितः संयोगः = सम्बन्धः = अपूर्वशरीर-प्राणयोराद्यः संयोगो जन्म । एवं शरीरचरमप्राणसम्बन्धध्वंसो मरणमित्याख्यायते । तदपि धर्माधर्माधीनमेव । तदेवं धर्माधर्माधीनो जन्ममरणप्रवाहः प्रेत्यभावपदेन व्यवह्रियते । स एव पुंसां बन्धः । बन्धस्यैव नामान्तरं जरज्जरीभाव इत्यागमे ।

अन्ये तु योऽयं धर्माधर्मनिमित्तः शरीरेन्द्रियबुद्धिवेदनाभिः सम्बन्धः स एव विभाग इत्युच्यते । कस्मात् ? तदवसानत्वात् । विभागावसानः खल्वयं संयोगो विभाग इति व्यपदिश्यते वैराग्यार्थम् । देहेन्द्रियादिभिः संयोगो जन्म ततो विभागो मरणं व्यपदिश्यते । तावुभौ संयोगावपवर्गं यावदनिशमावर्तमानौ प्रेत्यभाव इत्युच्यते । यदा खल्वयं म्रियते तदा प्रैतीत्युच्यते । पूर्वशरीरं जहाति । प्रेत्य च भवति । भूत्वा प्रैति प्रेत्य च पुनर्भवति । स चायं प्रेत्यभावो यावन्नोपरमति तावत्पुरुषस्य बन्ध इत्युच्यते ।

अयमेव शरीरमनोविभाग आत्मकर्मसु सत्सु मोक्षः सम्पद्यते । तत्रात्मकर्माणि श्रवणं मननं योगाभ्यासो निदिध्यासनं प्राणायामः शमदमसम्पत्तिरात्मपरात्मसाक्षात्कारो देहान्तरोपभोग्यपूर्वोत्पन्नधर्माधर्मपरिज्ञानं तद्भोगानुरूपनानादेहनिर्माणं तयोर्भोगेन प्रक्षयो रागद्वेषलक्षणतुषारदमादग्निमधर्माधर्मयोरनुत्पादात् प्रवृत्त्यपाये जन्मापायाद् दुःखापायलक्षणोऽपवर्गः । एवञ्च गौतमकणादयोर्मते आत्यन्तिकदुःखापाय एव मोक्ष इति प्रतीयते । तदुक्तम्—"आत्मकर्मसु मोक्षो व्याख्यातः" ( वैशे० द० ६ अ० २ आ० १६ सू० ) इति ।

मीमांसकास्तु प्रपञ्चस्याविद्यानिर्मितत्वं न मन्यन्ते । "आत्मैवेदं सर्वम्" इति श्रुतिः सर्वस्यात्मैव भोक्तेति बोधयति । यथा यः कामयेत राष्ट्रं स्यामिति राष्ट्रस्य भोक्तेत्यर्थः । यथा वा यः कामयेत सर्वमिदं भवेयमिति सर्वस्य भोक्तेत्यर्थः । "आत्मा सर्वम्" इति सर्वस्यात्मा भोक्तेत्यर्थः । यत्तु "यत्र हि द्वैतमिव भवति" इति भ्रान्तिवचनम् , तदौपचारिकम् । यथा खलु स्वप्नप्रपञ्चेन्द्रजालमृगतोयादिः कियत्कालपर्य्यन्तं दृष्टिविषयतामापन्नः पश्चाद्विलीनो भोगविषयमतिक्रामति, तथा शरीरेन्द्रियादिविषयरूपप्रपञ्चोऽप्यात्मनः कियन्तं चित्कालमुपभोगविषयः सन् पश्चाद्विनाशादनुपभोग्यो भवतीत्युपभोगाभोगसादृश्येनोपचाराद् भ्रान्तिरित्युच्यते । पुंसां विषयभोगेष्वास्थानिवर्तनेनाभिरुचिं जनयितुं यदपि "यत्र त्वस्य सर्वमात्मैवाभूत्" इति मुक्तावात्मीयत्ववचनम् , तदपि न प्रपञ्चस्वरूपनिषेधार्थम् , किन्तु सत एव प्रपञ्चस्यात्मसम्बन्धनिषेधार्थम् । नह्यत्रैतावदुच्यते "यत्र ह्यस्य सर्वमात्मैवाभूत्" इति । किं तर्हि "यत्र त्वस्य सर्वमात्मैव" इति । तस्यायमर्थः—यत्र = यस्यामवस्थायां मुक्तौ, अस्यात्मनो दृश्यत्वेन दर्शनसाधनत्वेन न किञ्चदन्यत्सम्बन्धि विद्यते, किन्त्वात्मैवास्य सर्वं नान्यत्किञ्चित् तदा केन कं पश्येदिति । यथा लोके यस्य न कश्चिदपि बान्धवो मित्रं वाऽस्ति स वदति—न मे किञ्चिदस्ति, अहमेव सर्वम् । तत्र सम्बन्ध्यन्तरं न किञ्चिदस्त्येतावद्विवक्षितम् । एवं मुक्तावात्मनः सम्बन्ध्यन्तराभावमात्रं विवक्षितम् , न प्रपञ्चस्वरूपाभावः । प्रपञ्चस्य सत्यत्वान्न प्रपञ्चविलयो मोक्षः । किन्तु प्रपञ्चसम्बन्धविलय एव मोक्षः । त्रेधा हि प्रपञ्चः पुरुषं बध्नाति—१. भोगायतनं शरीरम् , २.

भोगसाधनानीन्द्रियाणि, ३. भोग्याः शब्दादयो विषयाः। भोगशब्देन च सुखदुःखविषयोऽपरोक्षानुभव उच्यते। तदस्य त्रिविधस्यापि बन्धस्य विलयो मोक्षः। विलये आत्यन्तिकत्वञ्च पूर्वोत्पन्नानां शरीरेन्द्रियविषयाणां विनाशः। अनुत्पन्नानाञ्चात्यन्तिकोऽनुत्पादः। अनुत्पादे आत्यन्तिकत्वं चोत्पत्तिप्रागभावासमानाधिकरण्यरूपम्। अत्यन्तानुत्पत्तिश्च निःशेषयोरुत्पादकधर्माधर्मयोः परिक्षयात्। सोऽयं प्रपञ्चसम्बन्धो बन्धस्तद्विलयश्चात्यन्तिको मोक्षः।

आनन्दमोक्षवादिनो वेदान्तिनः—नन्वशेषधर्मप्रक्षयान्मुक्तस्य न किञ्चित्सुखं स्यात्, सुखस्य धर्मजन्यत्वात्। तथा च पुरुषार्थत्वं मोक्षस्य भज्येतेति चेन्न, मुक्तानन्दस्य धर्मजन्यत्वाभावात्। तस्य धर्मजन्यत्वे विनाशित्वस्य दुर्वारत्वात्। तथा सति पुनरावृत्तिश्रुतिविरोधः स्यात्। स्वाभाविकस्त्वात्मानन्दः संसारेणाभिभूतः सन् निर्मुक्तसंसारस्याभिव्यक्तौ भोग्यः सम्पद्यते। स्वाभाविकत्वे चानन्दस्य "आनन्दं ब्रह्म" इत्यादिश्रुतिसहस्रं प्रमाणम्।

ननु सुखाभावेऽपि श्रुतय उपलभ्यन्ते "अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः" इति। सत्यम्। विषयसुखाभिप्रायकन्त्वेतद्वचनम्। अन्यथा आनन्दश्रुतिविरोधः। अथ सुखाभाववचनबलेन आनन्दवचनमेव दुःखाभावाभिप्रायं किमिति न व्याख्यायते? सुखाभाववचनानामल्पत्वात्तेषामेवान्यथा व्याख्यानं युक्तम्, न भूयसामानन्दवचनानाम्।

ननु विद्यमानोऽप्यानन्दोऽननुभूयमानोऽकिञ्चित्कर एव। न च मुक्तस्य सर्वकारणशून्यस्यानन्दानुभवः सम्भवति। स्वप्रकाशोऽत्रानन्द इति चेन्न, संसारावस्थायामप्रकाशात्। ननु तत्राप्यानन्दमयः पुरुषः स्वप्रकाश एव आत्मनि प्रेमोत्पत्तेः। नह्यसुखे प्रेमोत्पत्तिः सम्भवति, नाप्यविज्ञाते सुखे। किं संसारावस्थायामस्माभिरात्मा सुखरूपोऽनुभूयते? सत्यमित्युक्तिः साहसमात्रम्। यदि संसारिणोऽपि परमानन्दमनुभवेयुस्तदा मुक्तस्य न कश्चिदतिशयः।

अथ स्वप्रकाशोऽप्यानन्दः संसारावस्थायामभिभूतो न प्रकाशत इति चेत्, कोऽयं स्वप्रकाशमानस्याभिभवः? प्रकाशनिवारणं ह्यभिभवः। न च स्वप्रकाशस्याप्रकाशनं सम्भवति। यदि तु संसारावस्थायां न प्रकाशते तदा मुक्तावस्थायामुत्पद्यमानस्य कारणं वाच्यम्। विज्ञानमेव च प्रकाशरूपफलस्य कारणं वाच्यम्। तच्चेन्द्रियाधीनम्। न च मुक्तस्येन्द्रियाणि सम्भवन्तीति कथमानन्दानुभवः स्यात्?

नित्यसुखानुभवो नित्यानन्दो वा मोक्ष इति वेदान्तिमतम्। तच्चासङ्गतमिति मीमांसकाः। आत्यन्तिकदुःखध्वंसो हि मोक्ष इति नैयायिकवैशेषिकाः। प्रपञ्चसम्बन्धविलयो मोक्ष इति मीमांसकाः। एवञ्च ध्वंसस्यैव मोक्षत्वे नैयायिकमीमांसकयोः साम्यम्। न चात्यन्तिकदुःखध्वंसः, आत्यन्तिकप्रपञ्चसम्बन्धध्वंसो वा मोक्ष इत्यसङ्गतम्, अनागतदुःखध्वंसस्याशक्यत्वादतीतस्यातीतत्वाद् वर्तमानस्य दुःखस्य पुरुषप्रयत्नं विनैव निवृत्तेरिति चेन्न, हेतूच्छेदे पुरुषव्यापारस्य विवक्षितत्वात्। सवासनं मिथ्याज्ञानं संसारहेतुः। तदुच्छेदस्तत्त्वज्ञानात्। तत्त्वज्ञानञ्च योगविधिसाध्यम्, तदर्थं प्रवृत्त्युपपत्तेरित्यलं पल्लवितेन॥

***

# वेदेषु सङ्घविषयकं किञ्चित्

श्रीरामचन्द्रशास्त्री रराटे, संमानितप्राध्यापकः, वा० सं० वि०वि० वाराणसी ।

सम्प्रति सर्वत्रैव जगति सङ्घबलमहत्त्वं सर्वैरेवानुभूयते । तथा च "संहतिः कार्यसाधिका," "सङ्घे शक्तिः कलौ युगे" इत्यादीनि वचनानि न सन्ति विदुषामपरिचितानि ।

तत्रेदं विचार्यते—किमिदं सङ्घतत्त्वं नूतनबुद्धिविलसितं श्रुतिसिद्धं लोकहितावहं पुरातत्त्वं वेति । अत्रेदं बोद्धव्यम्—यत्किमपि जनकल्याणकारीति नूत्नं तत्त्वमाधुनिकैः स्वबुद्धिवैभवमिति निश्चीयते तत्सर्वमपि कुत्रचित्केनचिद्रूपेण नामसूत्ररूपं व्याख्यानरूपं वा प्रतिपादितमस्ति वेदेष्विति । सूत्रे मणिगणा इव सर्वं जगदनुस्यूतं भगवति वेदनारायणे । अत एवोच्यते—"वेदो नारायणो हरिः" इति ।

सङ्घबलविषयकमपि ऋग्वेदाथर्ववेदयोर्बहु वर्णितमस्ति । ऋग्वेदस्य चरमे भागे सङ्घोपदेशामृतं पायितं वर्तते भगवता । तथा हि ऋग्वेदे ( १०।१९ )—

संसमिद्युवसे वृषन्नग्ने विश्वान्यर्य आ ।<br>
इलस्पदे समिध्यसे स नो वसून्या भर ॥<br>
सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।<br>
देवा भागं यथा पूर्वे संजानाना उपासते ॥<br>
समानो मन्त्रः समितिः समानी समानं मनः सह चित्तमेषाम् ।<br>
समानं मन्त्रमभि मन्त्रये वः समानेन वो हविषा जुहोमि ॥<br>
समानी व आकूतिः समाना हृदयानि वः ।<br>
समानमस्तु वो मनो यथा वः सुसहासति ॥<br>
संज्ञानमुशनावदत् ।

इदं संज्ञानसूक्तमित्युच्यते । अस्यर्षिः संवननो देवताग्निरनुष्टुप्छन्दश्च ।

अत्र प्रथमं सर्वे ऋषयः सम्भूयाग्निमुपाजग्मुः । अथ भगवन्तं स्तुवन्तस्ते तत्तत्कामपूर्तये तं प्रार्थयामासुः । हे कामपूरक, त्वमेवास्माकं स्वाम्यसि । त्वमेव सृष्टिकर्ता तत्पालकश्चासि ।

सर्वेषु देवेषु मध्ये त्वमेव वैश्वानरः सर्वान् व्याप्नोषि च। त्वमेवोत्तरवेदिरूपे पृथ्वीस्थाने ऋषिभिः सन्दीप्यसे। एतावद्वीर्यस्त्वमस्मभ्यं धनादि देहीति। तत्तेषांवचो निशम्याग्निरुवाच। हे ऋषयः! यद्यपि भवद्भिर्धनं याचितमस्ति, तथापि तन्न दास्याम्यपि तु किमप्यविनाशि सङ्घबलरूपं द्रव्यं ददामीति।

भवन्तः सर्वदा सहैव सङ्गच्छत, सहैव वदत, एकविधमेव वाक्यं ब्रूत च। युष्माकं मनांसि समानरूपाणि भूत्वा समानरूपमेवार्थमवगच्छन्तु। यथा पुरातना देवा ऐकमत्यं स्थापयन्तो हविर्भागं गृह्णन्ति स्म, तथा यूयमपि वैमत्यं परित्यज्य धनं यशो राज्यादि च स्वीकुरुत।

समानो मन्त्र इत्यादि। भवतां समेषामृषीणां गुप्तभाषणं शास्त्राद्यात्मिका स्तुतिश्च भिन्नरूपा मा भूदपि तु समानरूपैवास्तु। श्रीमतां सकलवस्तुप्राप्तिरपि समानैवास्तु। एवं भवतां मननसाधनमन्तःकरणं सुविचारसमुल्लसितं ज्ञानं च परस्परविरोधरहितमेकीभूतमेवास्तु। अहं समेषां भवतां कृते समानमेव मन्त्रं संस्करोम्यैक्यभावनाय, तथा समेषां यज्ञमपि समानेनैव पुरोडाशादिना कारयामि।

समानी व आकूतिरित्यादि। हे यज्ञशीला ऋत्विजो ब्रह्मवेत्तारो युष्माकं सर्व एवाध्यवसाय एकविध एवास्तु, तथा युष्माकं हृदयानि सन्त्वेकविधान्येव। युष्माकमन्तःकरणानि समानानि भवन्तु, येनैतादृशेनैक्येन सर्वेऽपि भवन्तः सर्वत्र जयशीला भवत।

एवमेत उपदेशा मन्त्रचतुष्टये प्रतिपादिता धर्मार्थकाममोक्षरूपपुरुषार्थचतुष्टयदानसमर्थाः सन्तीत्यत्र न केषामप्यस्ति विवादावसरः। सर्वेष्वप्येतेषु मन्त्रेषु मनस ऐक्यमेव वरीवर्ति, यतस्तदेव सकलबन्धमोक्षहेतुः। अत एवोक्तम्—"मन एव मनुष्याणां कारणं बन्धमोक्षयोः" इति।

एवमनया दिशा सिद्धमिदं यत् कीदृशं सङ्घबलस्य महत्त्वं वर्णितं वर्तते ऋग्वेद इति। एवमेवाथर्ववेदेऽप्यस्ति महिमास्य सङ्घबलस्य।

अस्मिन् खलु वेदे बहुधानेकत्र वर्णनमस्ति सङ्घबलस्य। तत्सर्वं विस्तरभयान्नोपस्थाप्यतेऽपि तु दिङ्मात्रं यथा—

वाजस्य नु प्रसवे सं बभूविमेमा च विश्वा भुवनान्यन्तः।
उतादित्सन्तं दापयतु प्रजानन् रयिं च नः सर्ववीरं नि यच्छ॥

(अथर्ववेदे ३।२०।८)

एतद्रयिसंवर्धनसूक्तम्। अस्य वसिष्ठ ऋषिरग्न्यादयो देवता अनुष्टुप् छन्दश्च। अस्यायमर्थः—

## वेदेषु सङ्घविषयकं किञ्चित्

वयं सर्वे बलस्योत्पत्त्यै एव समुद्भूताः स्मः। सर्वमिदं जगदन्तःसङ्घटितमेव समुद्भूतम्। एतज्जानानः पुमान् कृपणं प्रेरयेद्यत्सोऽस्मभ्यं वीरभावयुक्तः सन् धनं ( सङ्घटनरूपं ) यच्छेदिति।

अग्रे च—

उपोहश्च समूहश्च क्षत्तारौ ते प्रजापते।

ताविहा वहतां स्फातिं बहुं भूमानमक्षतम्॥ ( ३।२४।७ ) इत्यादि।

एतत्समृद्धिप्राप्तिनामकं सूक्तम्, भृगुरस्यर्षिः प्रजापतिर्देवता छन्दश्चानुष्टुप्। अस्यार्थः—सर्वे ऋषयो भगवन्तं प्रजापतिं कथयन्ति—हे प्रजापालक, उत्थाप्य नयनकारी सर्वानेकीकृत्य सङ्घटनकारी चेति द्वाविमौ तव सहायकौ। तौ द्वौ वृद्धिमानयतां बहुधनेनाक्षय-समृद्धिञ्च प्रयच्छतामिति।

अग्रे त्वस्य सङ्घबलस्य प्रतिपादकं स्वतन्त्रं सूक्तमेव वर्तते। अ० ३।३०। सहृदयमित्यादि। अस्य सूक्तस्य साम्मनस्यसूक्तमिति नामधेयमथर्वाऽस्यर्षिश्चन्द्रमा देवता त्रिष्टुबनुष्टुप् चेति छन्दसी।

सहृदयं सांमनस्यमविद्वेषं कृणोमि वः।

अन्यो अन्यमभि हर्यत वत्सं जातमिवाघ्न्या॥

अर्थः—अहं सर्वमपि कार्यजातं सहृदयतां सद्विचारपूर्णं चेतश्च त्वदर्थमेव करोमि। यूयं सर्वे परस्परं प्रेम्णा व्यवहरत यथा गौरुत्पन्नं वत्सं व्यवहरतीति।

अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः।

जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम्॥

पुत्रः पितुरनुकूलं कर्म करोतु मात्रा सहोत्तमचेताश्च भवतु, पत्नी पतिं प्रेम्णा मधुरं शान्तियुक्तं च भाषेत। अग्रे च—

भ्राता भ्रातरं मा द्विक्षत्‌ मा स्वसारमुत स्वसा। सर्वे समानमता भूत्वा समानकर्मकारिणश्च भूत्वोत्तमं व्यवहरन्तु। अत्र यदि विचारः क्रियेत तर्हि सहजमेव किमप्यलौकिकं रत्नं निर्गच्छेत्। अत्र "मातृ" शब्दस्यार्थोऽस्ति मातृभूमिः, पितृशब्दस्यार्थो राष्ट्रं राष्ट्रनायकश्च, "अन्नदाता पिता प्रोक्तः" इत्यादिन्यायात्। सर्वे राष्ट्रवासिनो भ्रातरः समस्ताः स्त्रियश्च स्वसारः। एवं राष्ट्र-कल्याणेच्छासम्पन्नास्माकं बुद्धिरेव पत्नी इत्यादि।

येन देवा न वियन्ति नो च विद्विषते मिथः।

तत्कृण्मो ब्रह्म वो गृहे संज्ञानं पुरुषेभ्यः॥

येन व्यवहरत्सु नरेषु न कदापि विरोधो भवति न वा वर्द्धते परस्परं द्वेषस्तदेकतावृद्धिकारि परमोत्कृष्टं संज्ञानं ( एकतारूपमुत्तमज्ञानं ) भवद्गृहस्थितेभ्यः सर्वेभ्यो मनुष्येभ्यः कुर्मः।

अग्रे च—सर्वे यूयं वृद्धसम्मानकारिणः, उत्कृष्टचित्ताः, आसिद्धिप्रयत्नकारिणः, एकधुरायां कार्यलग्ना अग्रगामिनश्च सन्तः कदापि विरुद्धा विच्छिन्ना वा न भवत, अपि तु परस्परं वल्गु वदन्तोऽग्रे गच्छतो उन्नतिशीलाः सन्तः। अहं वः सहैव पुरुषार्थसम्पन्नान् समान् विचारयुक्तमनसश्च करोमि। युष्माकं जलपानस्थानमेकमेवास्तु। युष्माकमन्नभागोऽपि सहैवास्तु। भोजनस्यातीव महत्त्वं वर्तते। येन सहास्माकं जलपानं भोजनञ्च भवति तेन सहजमेवाकर्षणं प्रेम च वर्द्धते। अत एव श्रीमद्भागवते दशमस्कन्धे भगवान् श्रीकृष्णः श्रुत्यनुसारं गोपैः सहैकीभूय बुभुजे। अत एव भगवतेदमाज्ञप्तं वर्तते तेभ्य ऋषिभ्यः। अग्रे च—एकस्मिन्नेव योक्त्रे युष्मान् सर्वान् युनज्मि। सर्वे सम्यञ्चः सन्तश्चक्रनाभिमिवेश्वरमग्निमाश्रयन्तस्तं पूजयत। अहं सर्वान् युष्मान् परस्परसेवाभावेन संयोज्य पुरुषार्थिन उदारचेतसः समाननेतुराज्ञापालकांश्च करोमि। यथा देवाः सम्मिलिताः सन्तोऽमृतं रक्षन्ति, तथैव यूयमपि सायं प्रातः सौमनस्यं रक्षत। समेषां युष्माकं चेतांसि प्रसन्नानि तिष्ठन्तु।

एतादृशा एवोपदेशा अथर्ववेदे ६।९४ एवं ७।५२ समुपलभ्यन्ते। तेषु ये पुनः पुनस्त एवोपदेशा वर्णिताः, तेषामिदमेव तात्पर्यं यज्जनैः सर्वथा तदेवाचरणीयं यद्भगवतोपदिष्टं वर्तते। तत्र यो विशेषः स सम्प्रति निरूप्यते।

भगवान् प्रथमे सूक्ते प्रजायामैक्योद्भावनं करोति—

१—येऽत्र द्रोहकारिणः शत्रवो वर्तन्ते तान् सर्वानेकीकृत्यैक्ये नयेम। अनेनेदं फलति यत्कीदृग् व्यापकं क्षेत्रं वर्तते सङ्घबलस्य येन शत्रवोऽप्येकीक्रियन्तेऽनेनैवेति।

२—अहं स्वमनसा युष्माकं मनांस्येकीकरोम्याकर्षयामि च। एवं समेषां मनांस्येकस्मिन्नेव केन्द्रे केन्द्रितानि सन्तु। मच्चित्तानुसारमेव युष्माकं चेतांसि सम्भवन्तु। अहं (नेतृरूपः) यथा यदुद्देश्यं गृहीत्वा चलामि यच्च विचारयामि तथैव यूयमपि चलत विचारयत च। कदाप्यस्माकं चेतांसि प्रतिकूलानि न भवन्तु। अहं सर्वान् भवतः स्ववशे स्थापयामि, सर्व एकस्मिन्नेतरि विश्वस्ताः सन्तु। यूयं सर्वे मन्निर्दिष्ट एव मार्गे गच्छत नास्माकं मार्गो विच्छिन्नः स्यात्। नेतुः प्रजायाश्च मार्गो यदा भिन्नो भवति, तदा राज्यं राष्ट्रं वा न सङ्घटितं भविष्यति।

३—ओते मे द्यावा पृथिवी ओता देवी सरस्वती।
ओतौ म इन्द्रश्चाग्निश्चर्ध्यास्मेदं सरस्वति॥

## वेदेषु सङ्घविषयकं किञ्चित्

आकाशः, पृथिवी, सरस्वती, इन्द्रोऽग्निरन्ये देवा विश्वे देवाश्चेति सर्वेऽविच्छिन्न-सम्बन्धाः सन्तः सर्वदा तिष्ठन्ति। यद्येतेषां सम्बन्धविच्छेदः स्यात् तदास्य जगतः स्थितिरेव न भविष्यतीति निश्चप्रचम्। एवमेव सर्वे यूयं सङ्घटितास्तिष्ठन्तु समाजस्य स्तम्भरूपाः। यथा तन्तुभिर्मिलितैः सद्भिरेव 'पट' इति संज्ञा लभ्यते, तथैव सर्वैर्मिलितैः सद्भिर्जनैः 'समाज' इति संज्ञा। तस्मात्सर्वथा सङ्घटितैर्भाव्यम्।

एतादृगेव वर्णनम् अथर्व० ६।७४ वर्तते। तत्र दिङ्मात्रं यथा—

यथादित्या वसुभिः सम्बभूवुर्मरुद्भिरुग्रा अहृणीयमानाः।
एवा त्रिणामन्नहृणीयमान इमान्जनान्त्संमनसस्कृधीह॥

यथा भगवान् भास्करः स्वस्य द्वादशमूर्तिभिर्वसुभी रुद्रैश्च सह विश्वहिते संल्लग्नः, तथैव यूयं (नेतारः) एताः प्रजाश्च सम्मिलितास्तिष्ठन्तु। अनेनेदं फलति यद् राष्ट्रनायको विदुषः, शूरान्, कलाकारान्, सेवकान्, कृषकान्, व्यापारिणश्चेत्येवंरूपेण सर्वानपि समाजस्य तांस्तान् वर्गान् सुसङ्घटयेत्। एतादृग् अस्य सङ्घबलस्यानिर्वचनीयं वर्णनं वर्तते यद् विचारयितुः सहजमेव सर्वा आपदो दूरीभवेयुरिति।

एवमपरं साम्मनस्यसूक्तम् अथर्व० ७।५२ वर्तते, तद्यथा—

संज्ञानं नः स्वेभिः संज्ञानमरणेभिः।
संज्ञानमश्विना युवमिहास्मासु नियच्छतम्॥

हे प्रभो, भवानस्मभ्यं तादृग् ज्ञानमर्पयतु येन वयं स्वजनैः स्वसमाजेन च सह प्रेम्णा व्यवहरिष्यामः। सर्वैरपीदमपेक्षितं वर्तते यत्सर्वैरपि प्रभोः पारस्परिकं प्रेम सङ्घटनञ्च याचनीयम्।

अग्रे च—अस्माकं ये शत्रवस्तेऽप्यपेक्षिताः कदाचिदस्माभिः। हे प्रभो, तैरप्यस्माकं प्रेम वर्द्धताम्। ते वयञ्च सम्मिलिताः स्थास्यामः। अस्माकं राजनीतिकादिसम्बन्धास्तैः सह भवन्तु। अत्रेदं बोद्धव्यम्—यन्न कयापि भीत्याऽस्माभिररिभिः सह सन्धिः करणीयः, अपि तु पूर्वं पारस्परिकं सुदृढं सङ्घटनं विधाय तदनन्तरमेव। यथा श्रीमद्भागवते—"अरयोऽपि हि सन्धेयाः सति कार्यार्थगौरवे" इति।

हे अश्विनीकुमारौ, युवामपि सङ्घटनस्य व्याख्यानं कुरुतम्। युवां खलु वैद्यराजौ ततोऽस्मभ्यं विविधा वनस्पतीर्नीरोगितां शक्तिमत्त्वञ्च प्रयच्छतम्। युवां तीव्रगतिमदमृतमर्पयतं

यत् सङ्घामृतमित्युच्यते, येन चास्माकं समाजश्चन्द्र इव वर्धताम्। युवां तद्दतमर्पयतम्, येनास्माकं सुयोजनाः सफलीभवेयुः सुपथश्च लभ्येत। अस्मद्योजनाः कदापि निष्फला धनजनादि विनाशिन्यश्च मा भूवन्, अन्यथा सन्देहेर्ष्याद्वेषादिभिः समाजो विघटितो भविष्यति।

मनसाऽप्यस्माकं विरोधो न स्यात्। मानसिकेन बलेन सर्वः समाजो राष्ट्रोन्नत्यै सन्नद्धः समरसश्च स्यात्। राष्ट्रेषु विश्वस्मिन् संग्रामशब्दोऽपि न भवेत्। समेषां राष्ट्रभक्तानां देशप्रेमिणां सुपुत्राणामेतादृग् वर्धिष्णु भवेन्मानसिकं बलं येन शत्रूणां रुजां भयानाञ्च कदापि शङ्खनादकरणे प्रसारे विकारे वा साहसं न भवेत्। ते दूरत एव सङ्घबलस्य महिमानं श्रुत्वा पलायन्ताम्। सङ्घसूर्योदये सति वज्रस्यापि भयं मा भूदस्माकं चेतसि। न स्याम वयं कदापि भेदभाविनोऽमानवव्यवहारिणश्च। अस्माकमिन्द्रः (राजाधिपतिर्वा) न कदापि रुष्टो भवेदस्मदुपरि।

अथर्ववेदे ६।७३ सङ्घोपदेशो राष्ट्रनायकस्य महत्त्वञ्च विविधतया वर्णितमस्ति। तद्यथा स्वल्पेन—

एह यातु वरुणः सोमो अग्निर्बृहस्पतिर्वसुभिरेह यातु।<br>
अस्य श्रियमुपसंयात सर्व उग्रस्य चेत्तुः संमनसः सजाताः॥

अस्यायमर्थः—वरुणः सोमोऽग्निर्बृहस्पतिश्चेति सर्वे वसुभिः सहात्रायान्तु। हे सत्कुलोत्पन्नाः पुरुषाः, सर्वे समानमनसो भूत्वास्य वीरस्य चेतनादायकस्य चित्तस्य शोभां वर्धयध्वम्। अग्रे च—यद्बलं युष्माकं चेतस्यस्ति, यः सङ्कल्पश्च युष्माकं चेतसि प्रविष्टस्तत्सर्वमहं घृतेनान्नेन च संयुनज्मि। हे सजाताः! युष्माकं समेषां प्रसन्नता मयि (नायके) अस्तु। अत्रैव यूयं तिष्ठत, मा दूरं गच्छत, पूषा युष्माकमग्रे गमनस्य मार्गं रुणद्धु। वास्तोष्पतिर्वोऽनुकूलतयाह्वयतु। हे सजाताः! मयि युष्माकं प्रेमास्तु। अर्थात्—सर्व एकस्मिन्नेव स्थाने तिष्ठन्तु, नेतस्ततो गच्छन्तु, ईश्वरस्तान् सर्वाननुकूलयतु। यत एकस्मिन्नेतरि जनास्तिष्ठन्ति चेत्सङ्घबलमेधते। त एव यदि विच्छिन्नाः स्युस्तर्हि सङ्घबलं क्षीयते। अतः सर्वैरेकमेवाभिलषितव्यम्। न केनापि कारणेन केऽपि कलहायन्तां न वा विभक्ताः सन्तु। अग्रे च—यथादित्या वसवो रुद्राश्च सन्तोऽपि विभिन्ना एकीभूय जगतः कार्यं साधयन्ति, तथैव जनाः सन्तोऽपि रूपजात्याद्यन्तर्विभिन्ना एकीभूयान्यांश्चैकीकुर्वन्तो राष्ट्रकार्यं साधयन्तु।

सर्वे राष्ट्रस्य बुद्धिमन्त एकस्मिन् स्थाने सम्मिलिताः सन्तु, यस्मिन् सम्मेलने ज्ञानिनः, कर्मविदः, सैनिकाः, सेवकाः, सामान्याश्च जनाः सम्मिलन्तु। एवं सर्वेऽपि योग्यतमेन मनसा स्वराष्ट्रस्य राष्ट्रनायकस्य च बलमेधयन्ताम्। सर्वे स्वस्मिन् सुष्ठुविचारानभिलाषांश्च विकासयन्तु। सभायां

विचारदानावसरे न तेषामस्तु व्यक्तिगतः स्वार्थो जातीयतापक्षपातो वा। त आस्तिका राष्ट्रधर्मे महापुरुषचरितेषु च श्रद्दधानाः सन्तु। आपद्यपि ते नेतस्ततः पलायन्ताम्। स्वरक्षणे देशरक्षणे नेतृरक्षणे च ते संल्लग्नाः सन्तु। सर्वेषां चेतस्सु सहजं दैवीशक्तिरभयं सत्त्वसंशुद्धिर्ज्ञानयोग-व्यवस्थितिः•••....अहिंसा सत्यमक्रोधः.......तेजः क्षमा धृतिः शौचमद्रोहादिरूपमाविर्भवतु, येन सङ्घशक्तिरेधताम्। एवमनेन प्रकारेण सर्वे वयमेकस्य राष्ट्रनायकस्याश्रये तिष्ठाम।

एवमेतादृगेव निरुक्ते ६ खण्डे ५ पञ्चमेऽवलोकयन्तु—"इन्द्र ऋषीन् पप्रच्छ दुर्भिक्षे केन जीवतीति तेषामेकः प्रत्युवाच शकटः शाकिनी गावो जालमस्यन्दनं वनम् उदधिः पर्वतो राजा दुर्भिक्षे नव वृत्तयः" इति।

अत्र यदि 'दुर्भिक्ष'शब्दे विचारः क्रियेत तर्हि सुस्पष्टतया निष्पन्नं भवति यत्र भिक्षापि दुःखेनोपलभ्यते स दुःखदः सङ्कटकाल इति। राजनीतिशास्त्रानुसारं विविधा सङ्कटकालव्यवस्था। आधुनिकैरपि त्रिधा सा स्वीक्रियते। एवं तत्तत्सङ्कटकाले तास्ता वृत्तयः समाश्रयणीया इत्यव-गन्तव्यम्। तत्र द्वयोरयमर्थः—इतस्ततः पलायनमविधायैकस्मिन्नेव स्थाने स्थिती राजाश्रयश्चेति। सर्वाः प्रजाः सर्वथा ग्रामाध्यक्षे, राज्याध्यक्षे क्रमशोऽन्ते राष्ट्राध्यक्षे च सन्तु निघ्नाः। तस्मिन् काल एक एव नायकः समाश्रयणीय इति कलितं भवति।

अनायका विनश्यन्ति नश्यन्ति बहुनायकाः।
स्त्रीनायका विनश्यन्ति नश्यन्ति शिशुनायकाः॥

इत्यादिवचनान्यपि संघटयन्त्युपर्युक्तमेव। विपत्काले नास्माभिर्नायकदोषो दीपयितव्यः, न च तेन विद्वेषो विधेयः, न वा कृताः प्रमादा आवर्तयितव्याः। यद्यस्माभिराचरितं स्यादेवं तर्हि सङ्घबलं क्षीणं भविष्यति। यदि वयं पारस्परिकं कलहादिकं परित्यज्य सङ्घीभूतास्तिष्ठेम तर्हि विश्वस्मिन्नास्ति तादृशी काचन शक्तिर्याऽस्मान् पराजयेत। सङ्घबलेन्दुकलाकलनार्थं सर्वैरेव शिवैर्भाव्यम्। अयमेव राष्ट्रबलवर्द्धनस्य पन्था यत्पूर्वं सङ्घबलस्य वृद्धिर्विधेयेति।

एवमथर्ववेदे का० १ अ० १५ नदीवर्णनव्याजेन सङ्घबलं वर्णितमस्ति—

सं सं स्रवन्तु सिन्धवः सं वाताः सं पतत्रिणः।
इमं यज्ञं प्रदिवो मे जुषन्तां संस्राव्येऽण हविषा जुहोमि॥

यथा नदीनां बहवोऽम्बुवेगाः समुद्रमेवाभिमुखा द्रवन्ति, यथा मरुद्गणा मिलित्वैव लोकान् सञ्जीवयन्ति, यथा च पक्षिणो मिलित्वा सहैव उड्डीयन्ते, तथैव सर्वे वयं सम्मिलिता भूत्वा सङ्घ-

बलवृद्धये प्रयतेम जुहुयाम च। अस्योपरिसङ्केतितस्य सूक्तस्य "सङ्घटनमहायज्ञसूक्त"मित्यभिधानमस्ति। अस्येदं तात्पर्यं यत् सङ्घटनरूपे महायज्ञे सर्वैरेकीभूयाहुतिर्देया भगवतः प्रसादसिद्ध्यर्थमिति। वक्तृतारूपमन्त्रस्योच्चारणेन सर्वेषां हृदये सङ्घचेतनानयनं वक्तुः ( यज्ञे हवनकर्तुरित्यर्थः ) कर्तव्यमस्ति। अनेन कर्तव्यकरणेन जनतायां या पाशविकी पापिनी च वृत्तिरस्ति सा भस्मीभविष्यति। अयं च नियमोऽवलोक्यते यद् मनुजेषु पशुवृत्तिनाशे सति सहजमेव समृद्धिसम्पन्ना सद्भावना समुल्लसिता भवति। सहवाहिन्यो वाहिन्यः समुपदिशन्ति सस्यसम्पद्विवृद्धिकरणेन यदस्माभिरपि तथैव व्यवहारो विधेयो येनास्माकं सङ्घबलं तदनुरोधेनैश्वर्यं राष्ट्रबलञ्च वृद्धिमीयात्। यथा घृतादिदानेन कुण्डेऽग्निः प्रदीप्तो भवति, तथैवैकीकरणमहायज्ञेन ( सङ्घटनमहायज्ञ इति यावत् ) राष्ट्रं प्रदीप्तं भविष्यतीत्यत्र नास्ति सन्देहलवलेशावसरः।

सङ्घटनेन बलमेधते व्यष्टेः समष्टेश्च। उपरि ये नद्यादिरूपा दृष्टान्ता वर्तन्ते मन्त्रे त एतत्साधका एव। सङ्घटनसम्पन्नं राष्ट्रमुन्मूलयितुं न कोऽपि समर्थोऽस्ति जगति। "न पादपोन्मूलनशक्तिरंहः शिलोच्चये मूर्च्छति मारुतस्य" इति यथार्थमेव प्रतिपादितं कविकुलगुरुणा। अत्र चेदमेव काम्यते—

समहमेषां राष्ट्रं स्यामि समोजो वीर्यं बलम्।
वृश्चामि शत्रूणां बाहूननेन हविषाहम्॥

इति शम्॥



# वेदेषु पितरः

म० म० श्रीगिरिधरशर्मा चतुर्वेदः, सम्मानितप्राध्यापकः, वा० सं० वि० वि० वाराणसी ।

प्रचोदिता येन पुरा सरस्वती
वितन्वता यस्य सतीं स्मृतिं हृदि ।
स्वलक्षणा प्रादुरभूत् किलास्यतः
स मे ऋषीणाम् ऋषभः प्रसीदतु ॥

तद्दिव्यमव्ययं धाम सारस्वतमुपास्महे ।
यत्प्रसादात् प्रलीयन्ते मोहान्धतमसच्छटाः ॥

पूर्वेषु व्याख्यानेषु मया स्पष्टं प्रतिपादितं यद्वैदिकस्य विज्ञानस्य प्राणशक्तिरेव मुख्य आधार इति । त्रिविधा हि जगति दृश्यन्ते भावाः—ज्ञानम्, क्रिया, अर्थाश्च । एषां त्रयाणामपि मूलानि मनः, प्राणः, वाक् चेति त्रितयमेव श्रुतिषु समाम्नातम् । शतपथब्राह्मणे हि "सोऽयमात्मा मनोमयः, प्राणमयः, वाङ्मयश्च" इति बहुश एभिरेव पदैः प्रकारान्तरेण वा श्रूयते । यत्र च कस्यचिदभिनवपदार्थस्योत्पत्तिः प्रस्तोतव्या भवति तत्र "स ऐक्षत, स तपोऽतप्यत्, सोऽश्राम्यत्" इत्यनेनैव क्रमेण किञ्चित्परिवर्तनेन वा बहुशः श्रूयते । तत्रेक्षणं नाम मनसो धर्मः, तपःपदबोध्या क्रिया च प्राणधर्मः, श्रमश्च सर्वभूतादिभूताया वाचो धर्म इति आत्मभूते त्रयेऽपि क्षोभरूपा स्वस्वव्यापाराः प्रतिपाद्यन्ते । आत्मभूतस्य त्रितयस्य क्षोभादेवाभिनवपदार्थोत्पत्तिर्भवतीति । आत्मभूते त्रितये च मनो ज्ञानस्य मूलम्, क्रिया प्राणस्य, वाक् चार्थानां मूलमिति प्रत्येतव्यम् । वाच एव विवर्तभूतानि सर्वाणि भूतानीति "वाचीमा विश्वा भुवनानि तस्थुः" इत्यादिशब्दैर्बहुधा श्रूयते । भवतु नाम, प्राणो गतेर्मूलम्, गतिरेव च जगदुत्पादयतीति प्राणमेव मुख्यतया आधारीकरोति श्रुतिः । गतिः क्रिया चेति पर्यायशब्दौ । क्रियाशक्तिरेव च माया-बलादिशब्दव्यवहार्या ब्रह्मणि जगत् प्रदर्शयतीति श्रुतेः सिद्धान्तः । गतिश्चेयं द्विविधा भवति । केन्द्रादारभ्य परिधिपर्यन्तं गतिरित्युच्यते । परिधेरारभ्य केन्द्राभिमुखी गतिस्त्वागतिपदेन व्यवह्रियते । तत्र च गतिरग्निपदेन, आगतिश्च सोमपदेन श्रुतिषु परिभाष्यते । एतावे-

वाग्नीषोमौ जगत उत्पादकावित्युक्तम्—"अग्नीषोमात्मकं जगत्" इत्यादिश्रुतिषु । अग्नीषोम-पदवाच्ये गत्यागती प्राणजन्ये एवेति निष्कर्षः ।

सोऽयं प्राणः प्रथमम् ऋषिरूपेण, तदनु पितृरूपेण, अनन्तरञ्च देवासुररूपेण कयाचित् प्रक्रियया गन्धर्वरूपेण च श्रुतिषु व्याख्यायते । शतपथब्राह्मणे हि षष्ठं काण्डमारभ्य पूर्वमृषीणां विवरणं दृश्यते । "प्राणा वा ऋषयः" इति च स्पष्टं श्रूयते । एते एव पञ्चर्षयः पितरः, देवाः, असुराः, गन्धर्वाश्चेति मिलित्वा सूक्ष्मं जगदित्याख्यायते । तत्रर्षयो देवाश्च पूर्वमत्र मया संक्षेपेण व्याख्याताः । पितरस्त्वत्र व्याख्यायन्ते । पितॄणामुत्पत्तिर्भगवता मनुना श्राद्धप्रकरणे पितृनिरूपणावसरे स्पष्टीकृता—

मनोर्हैरण्यगर्भस्य ये मरीच्यादयः सुताः ।
तेषामृषीणामाद्यानां पुत्राः पितृगणाः स्मृताः ॥
ऋषिभ्यः पितरो जाताः पितृभ्यो देवदानवाः ।
देवेभ्यश्च जगत् सर्वं चरं स्थाण्वनुपूर्वशः ॥

जाबालोपनिषदि च स्पष्टमग्नीषोमयोरेतन्मूलभूतयोर्गत्यागतिक्रिययोश्च स्फुटं वर्णन-मुपलभ्यते—

अग्निराख्यायते रौद्री घोरा या तैजसी तनूः ।
शक्तिः सोमोऽमृतमयो रसशक्तिकरी तनूः ॥
अमृतं यत्प्रतिष्ठा सा तेजोविद्या कला स्वयम् ।
स्थूलसूक्ष्मेषु भूतेषु स एव रसतेजसी ॥
द्विविधा चेतसो वृत्तिः सूर्यात्मा चानलात्मिका ।
तथैव रसशक्तिश्च सोमात्मा च जलात्मिका ॥

अन्यच्च—

ऊर्ध्वशक्तिमयः सोमः, अधःशक्तिमयोऽनलः ।
ताभ्यां सम्पुटितं तस्माच्छश्वद्विश्वमिदं जगत् ॥ इत्यादि ।

अत्राग्निरधःशक्तिमय उक्तः, तस्येदं तात्पर्यं यदग्निर्दक्षिणस्या दिश उत्तरां दिशं गच्छति । उत्तरा दिगेव जगत ऊर्ध्वभागत्वेनाख्यायत इति तन्नाम्नैव स्फुटीभवति । अग्निर्दक्षि-णस्यां दिशि स्थितस्तत ऊर्ध्वमुत्तरां गच्छति । सोमश्चोत्तरस्यां स्थितस्ततोऽधो दक्षिणस्यामा-

गच्छति । अत एव सोमस्य स्थूलावस्थारूपा आपोऽपि नदीरूपेणोत्तरस्या एव दिशो दक्षिणस्यामागच्छन्त्यः सर्वैरस्माभिरनुभूयन्ते । उत्तरस्यां दिशि ऊर्ध्वंगतोऽग्निरेव परिधिं प्राप्य सोमरूपेण परिणमति । दक्षिणस्यामागतश्च पुनरग्निर्भूत्वोर्ध्वं गच्छतीत्यन्योन्यपरिवर्तनादेकस्यैव तत्त्वस्यावस्थारूपे इमे अग्निसोमाविति स्फुटं सिद्ध्यति ।

इमां जाबालश्रुतिमेवानुसृत्य शक्त्युपासनायां शिवस्य हृदयोपरि स्थिता शक्तिरुपास्यते । तत्र शिवो रुद्रपदवाच्योऽग्निरूपः । तदुपर्यागच्छन्ती सोमधारा तु शक्तिरूपेति । अन्यथापि चैतद्व्याख्यातुं शक्यते । पुरुष एव शिवरूपेण स्थितः, स च शक्त्या विना निर्विचेष्ट इति शवरूपेणैव स्थितः । तदुपरि क्रीडन्तीयं शक्तिः स्थितेति । आस्तामियमप्रकृतकथा ।

यौ त्वग्नीषोमौ गत्यागतिक्रियारूपौ प्रागुक्तौ, तत्र विशुद्धाः प्राणा अग्निरूपा एव ऋषिपदेनाख्यायन्ते । तत्र तु सोमसम्बन्धे जाते सौम्याः प्राणा उद्भवन्ति । त एव सौम्याः प्राणाः पितर उच्यन्ते । ऋषीणां प्रथमे स्वयम्भूमण्डल एवोद्गमः, तदनु परमेष्ठिमण्डले सौम्ये सोमसम्बन्धात् पितृणामुद्गमः । अथ तृतीये सूर्यमण्डले देवानां प्रादुर्भाव इत्ययमेव क्रमो भगवता मनुनाऽभिहितः । इमे चाग्नीषोमपदाभ्यामाख्याते गत्यागती सर्वेष्वपि पदार्थेष्वनवरतं प्रवर्तेते । वेदबाह्या अपि जैनबौद्धाद्यास्तत्त्वमेतदभ्युपगच्छन्ति । तथा हि—जैनदर्शने "उत्पादव्ययध्रौव्ययुक्तं सत्" इति सतो लक्षणमुच्यते । सर्वेष्वपि पदार्थेष्वागतिरूपेण सोमेन नवनवावयवोत्पादः, गतिरूपेणाग्निना च व्ययः सतोरप्युत्पादव्यययोस्तदेवेदमिति वस्तुनि या प्रत्यभिज्ञा तदाश्रय एव ध्रौव्यम् । तानीमानि उत्पादव्ययध्रौव्याण्येव सत्तापदेनोच्यन्ते, तदाश्रयाश्च सर्वे पदार्थाः सन्त इति व्यवह्रियन्त इति जैनसूत्राशयः । बौद्धाश्चापि अर्थक्रियाकारित्वमेव सत्त्वमभ्युपगच्छन्ति । प्रत्येकं हि वस्तु यं कमप्यर्थमुत्पादयति यां कां वा क्रियामपि कुर्वद् दृश्यते तदेवार्थक्रियाकारित्वं सत्तापदेन व्यवह्रियते । तादृशसत्तावन्तश्च पदार्थाः सन्त इत्युच्यन्ते । गत्यागतिरूपा क्रिया चेयं प्रतिक्षणं परिवर्तत इति क्षणिकमेव सर्वं जगत् तैर्मन्यते । क्रियैकाद्वयवादग्रहणादेव ते श्रमणा इत्युच्यन्ते ।

सोमपदवाच्या आगतिरेवेयं पदार्थान् पाति नवनवानुत्पादयति चेति पितृपदेनाख्यायते । जनक एव च पितृपदेन लोके व्यवह्रियत इति रक्षणस्योत्पादनस्य च सम्बन्धात् सौम्यानां प्राणानां पितृत्वं स्थान एवोच्यते ।

त इमे पितरस्त्रिविधाः श्रुतिषु व्याख्यायन्ते। १—दिव्यपितरः, २—ऋतुपितरः ३—प्रेतपितरश्चेति। तत्र पूर्वोक्तमनुवचनरीत्या ऋषिभ्य उत्पन्ना देवासुराणामुत्पादकाश्च प्राणविशेषा दिव्याः पितरः। त इमे त्रिष्वपि लोकेषु परिव्याप्य तिष्ठन्ति। तदेतद् ऋग्वेदश्रुत्या समाम्नातम्—"उदीरतामवर उत्परास उन्मध्यमाः पितरः सोम्यासः" (ऋ० अष्ट० ७।६।१७) इति। अवरे परे मध्यमाश्चेति त्रिविधाः पितर आम्नाताः। अत्र सोमसम्बन्धात् त्रीण्यन्तरिक्षाण्येव ग्राह्याणीति बहवो विद्वांसो मन्यन्ते। अस्माकं भूमेः सूर्यमण्डलस्य च मध्ये चन्द्रेणाधिष्ठितं प्रथममन्तरिक्षम्। सूर्यमण्डलादुपरिष्टात् परमेष्ठिमण्डलादधस्ताच्च महर्लोकाख्यं द्वितीयमन्तरिक्षम्। सूर्यमण्डलादुत्पन्नायास्त्रिलोक्याः सूर्येण सह लये तत्रैवर्पयस्तिष्ठन्तीति पुराणेष्वभिहितम्। तेभ्य ऋषिभ्य एव सोमसम्बन्धात् पितरो जायन्ते। परमेष्ठिमण्डल उत्पन्नाश्च पितरो महर्लोक एव परिपुष्टा भवन्ति। अथ परमेष्ठिमण्डलादुपरिष्टात् स्वयम्भूमण्डलादधस्ताच्च तपःपदवाच्यं तृतीयमन्तरिक्षम्। तत्रापि चैषां व्याप्तिः पूर्वोक्तश्रुत्या ज्ञायते। ते परे पितर उच्यन्ते। अथर्वश्रुतावपि—

उदन्वती द्यौरवमा पीलुमतीति मध्यमा।
तृतीया ह प्रद्यौरिति यस्यां पितर आसते॥
(अथर्व० कां० १८ अ० २ सू० २)

इति त्रीण्यन्तरिक्षाण्येव द्युपदेनोक्तान्यनुसन्धेयानि। एत एव च त्रयो नान्दीमुखाः, पार्वणाः (अश्रुमुखाः), प्रेताश्चोच्यन्ते। नान्दी नाम समृद्धिः। सर्वोपरिष्टाद् विराजमानास्तृतीयलोकस्थाः पितरः समृद्धिशालित्वाद् नान्दीमुखा आख्यायन्ते। मध्यमलोकस्थास्तु तदपेक्षयाऽवरकक्षाका इत्यश्रुमुखा उच्यन्ते। इतः प्रेत्य ये जीवा गच्छन्ति तेऽन्तरिक्षे दिव्यपितृभिः संगता भवन्तीति तत्साहचर्यादवरान्तरिक्षस्था दिव्यपितरोऽपि प्रेता इत्याख्यायन्ते, यद्वा तृतीयस्मिन्नन्तरिक्षे स्थिताः पितर ऊर्ध्वमुखा भवन्तीति नान्दीमुखा उच्यन्ते। मध्यमस्थास्तु जलस्योत्पादनेऽपि कारणीभूता भवन्तीत्यश्रुमुखा उच्यन्ते, अश्रूणां जलरूपत्वात्।

ते चेमे दिव्याः पितरः पुनः प्रत्येकं त्रिविधाः—अन्नरूपाः, अन्नादरूपाः, तटस्थाश्च। ये स्वयं परेषामन्नरूपा भूत्वा परान् पुष्यन्ति तेऽन्नरूपा आख्यायन्ते। ये तु परत्रोपसंक्रान्ता अन्नं भुञ्जते तेऽन्नादरूपाः। ये तु नान्नं भुञ्जते न परैर्भुज्यन्ते ते तटस्थाः। तत्रान्नरूपा अग्निष्वात्ताः, बर्हिषदः, सोमसदश्चेति त्रिविधाः। ये अग्निनैवाद्यन्ते "अग्निरेव यान् दहन् स्वदयति

ते अग्निष्वात्ताः" । ये च बर्हिषि कठिनद्रव्येऽन्नरूपे तिष्ठन्ति ते बर्हिषदः । ये च तरले द्रव्ये स्थिताः परैरन्ते ते सोमपाः । एवमन्नादा अपि त्रिविधाः—हविर्भुजः, आज्यपाः, सोमपाश्चेति । कठिनं द्रव्यं ये भुञ्जते ते हविर्भुजः । तरलं तु द्रव्यं द्विविधं श्रुतिषु परिभाष्यते । यदग्निसम्बन्धात् प्रज्वलितमग्निरूपतामेव गच्छति तदाज्यमित्युच्यते, यथा घृतं तैलं मद्यं चेत्यादि । यत्तु नाग्निना प्रज्वलति, किन्त्वग्नौ प्रक्षिप्तमग्निं शमयति तत् सोमपदेनोच्यते । तत्राद्यं ये भुञ्जते, अर्थादात्मसात्कुर्वन्ति त आज्यपाः । तटस्थास्तु सुकालिन उच्यन्त इति सप्तविधा दिव्याः पितरः । पुराणेषु त्वष्टौ पितर आख्यायन्ते—

कव्यवालोऽनलः सोमो यमश्चैवार्यमा तथा ।
अग्निष्वात्ता बर्हिषदः सोमपाः पितृदेवताः॥

तत्र हविर्भुज एव 'कव्यवाट्'पदेन, सोमसदश्च सोमपदेन, बर्हिषदश्चाग्निसहचरा इति साहचर्यादग्निवाचकेनानलपदेनोक्ताः । यमश्च पितृसहचरत्वेनाग्रे व्याख्यास्यमानः पितृष्वेव परिगणित इति प्रक्रियाभेदमात्रं द्रष्टव्यम् । त्रिषु लोकेषु स्थितानां पितॄणां सहचरास्त्रयो देवा भवन्ति—अग्निर्वायुरादित्यश्चेति । तत्राग्निरष्टविधोऽष्टवसुरूपेण व्याख्यायते । वायुश्चैकादशरुद्ररूपेण । आदित्यो द्वादशरूपेण च श्रुतिष्वाम्नातः । त इमे पितृसहचराः पितृभिरुत्पादिता वा पितृसम्बन्धाभक्ता इति भगवता याज्ञवल्क्येन भगवता मनुना च पितृपदेनैवाख्याताः—

वसुरुद्रादितिसुताः पितरः श्राद्धदेवताः ।
प्रीणयन्ति मनुष्याणां पितॄनाज्येन तर्पिताः ॥

इत्यादिना याज्ञवल्क्यस्मृतौ ।

वसून् वदन्ति तु पितॄन् रुद्रांश्चैव पितामहान् ।
प्रपितामहांस्तथाऽऽदित्यान् श्रुतिरेषा सनातनी ॥

अथ पितृसहचरा अपि देवास्त्रिधा भिद्यन्ते—अग्निः सोमः, यमश्चेति । अग्नौ या निरन्तरं सोमाहुतिः पतति तस्या विच्छेदको यम आख्यायते । सोमाहुतिविच्छेदे तत्तत्पदार्थानां मृत्युर्नाम नाशो भवतीति यमो मृत्युरप्याख्यायते । त इमे पितृसहचरास्त्रयो देवाः श्राद्धकर्मण्यादौ हूयन्ते "अग्नये कव्यवाहनाय स्वाहा सोमाय पितृमते स्वाहा यमायाङ्गिरस्वते स्वाहा" इति । तदनु पितरः पूज्यन्ते । विच्छेदकत्वात् क्वचिच्छाखायां यमो न हूयते । इत्थं दिव्यपितरः संक्षेपेण व्याख्याताः ।

अथ ऋतुपितर आख्यायन्ते। अग्नौ सोमाहुतितारतम्याद् ऋतवो भिद्यन्ते। उत्तरस्यां दिश्यागते सूर्ये ऋतं नाम संवत्सराग्नेर्भाग उत्पद्यते। दक्षिणस्यां तु सूर्ये आगते सोम उत्पद्यते। सोमः पिण्डजनकत्वात् सत्यपदेनाख्यायते। तदेतत् "ऋतं च सत्यञ्चाभीद्धात् तपसोऽध्यजायत" इत्यघमर्षणमन्त्रे समाम्नातम्। मया च "ऋतञ्च सत्यञ्च" इति विश्वविद्यालयपत्रिकायां सारस्वत्यां सुषमायां मुद्रितञ्च। मासषट्कमग्नेर्वृद्धिः सोमस्य च ह्रासः, तदनन्तरं मासषट्कं सोमस्य वृद्धिः, अग्नेश्च क्रमेण ह्रासः। अग्नेस्तारतम्यादेवर्तूनां नामान्यपि संस्कृतभाषायामाख्यायन्ते। तथा हि—उत्पन्नमात्रोऽग्निर्यदा तेषु तेषु पदार्थेषु वस्तुमारभते तदा 'वसन्त' इति ऋतुनामोच्यते। "वसन्तोऽस्याग्नय" इति ऋतुरपि वसन्तः। यदा च वृद्धिं गतः स सर्वान् पदार्थान् गृह्णाति तदा ग्रीष्म इत्युच्यते, 'ग्रह'धातोरेव परोक्षया वृत्त्या ग्रीष्मशब्दनिष्पत्तेः। अनन्तरञ्चाभिवृद्धिं गतेऽग्नौ 'वर्षा' इत्यृतुनाम, वृद्धिशब्दस्यैव वर्षीयानित्यादौ व्याकरणे वर्षादेशदर्शनाद्। तदिदं षण्मासात्मकमृतुत्रय-मग्नेर्वृद्धिकालः, तदनु सोम उत्पन्ने तत्तारतम्यादग्निर्ह्रसति। यदा ह्रास आरभ्यते तदा शरदित्यु-च्यते। शीर्णो भवितुमारब्धोऽग्निरिति। यदा च विशेषेण ह्रासस्तदा 'हेमन्त' इत्युच्यते। हीनार्थ-बोधकाद् 'हि'धातोरेव हेमन्तशब्दनिष्पत्तेः। यदा चात्यन्तं शीर्णस्तदा यङ्लुङन्ताच्छिशिर-पदात् तद्व्यवहारः क्रियते।

न केवलम् ऋतूनाम्, अपि तु मासानामपि नामानि तत्तत्पदार्थोत्पत्तिसम्बन्धेनैव संस्कृत-भाषायां दृश्यन्ते। तथा हि—यस्मिन् मासे पुष्पफलादिषु मधूत्पद्यते स चैत्रो मधुनाम्नाऽऽ-ख्यायते। यदा च मधोर्वृद्धिः स वैशाखो 'माधव'नाम्ना। अग्नेर्वृद्धिदशायां शुक्र इति ज्येष्ठः शुचिरिति 'चाषाढः'। अथ यदा मेघेन प्रावरणात् सूर्यनक्षत्रादयो न दृश्यन्ते तौ श्रावण-भाद्रपदौ 'नभ' इति, 'नभस्य' इति चाख्यायेते। यदा च प्राणिषु 'अर्क' नामौजः प्रादुर्भवति तदाऽऽश्विनकार्तिकौ 'इष' इति, 'ऊर्ज' इति च; यदा च तदेवौजो बलरूपेण परिणमति तदा मार्गशीर्षपौषमासौ 'सह' इति, 'सहस्य' इति चाख्यायेते। अथ यदा पूर्वोक्त ऋतनामाग्नि-राविर्भवति तदा माघ-फाल्गुनौ 'तप' इति, 'तपस्य' इति च। संस्कृताध्येतारः पश्यन्तु संस्कृत-भाषाया महत्त्वं यत् तत्र मासर्तुनामश्रवणादेव तन्मासर्तुप्रभृतिषु जातानां पदार्थानां परि-चयोऽपि जायत इति। या तावदाङ्ग्लभाषा शिरोमणिभूताद्य मन्यते तस्यां 'जूनी'नामा कश्चिद् विशिष्टः पुरुषो यत्रोत्पन्नः स मास एव 'जून' इति ख्यातः। यस्मिंश्च 'जूली' इति कश्चिदुत्पन्नः स 'जुलाई', इत्येवं तत्तद्व्यक्तिनाम्ना मासनामानि प्रथन्ते। यत्र च कस्य-चिदपि विशिष्टस्योत्पत्त्यादिकं न स्मर्यते, ते मासाः सप्तमाष्टमनवमदशमपदैरेवोच्यन्ते,

तद्भाषापेक्षया संस्कृतभाषा गुर्वी वा हीना वेत्यपि च सम्यगालोच्यताम्। आस्तामियं प्रसङ्गागता कथा।

नाम्नैव ज्ञायन्ते यदेत ऋतवो न कालमात्रस्य संज्ञा अपि तु तत्तत्कालप्रादुर्भूतानामग्नीषोमादीनामिति। ते चैते अग्नीषोमाद्याः सर्वेषां पदार्थानां जनका इति पितर उच्यन्ते। तत एव "ऋतवः पितरः" इति तत्र तत्र श्रुतिषु समाम्नायते। स्मृतिष्वपि च श्राद्धप्रकरणे उक्तम्—"षड्ऋतूंश्च नमस्कुर्यात् पितॄनेव च धर्मवित्" इति। तदित्थं द्वितीयपितृरूपा ऋतवः संक्षेपेण व्याख्याताः।

अथ तृतीयविधाः प्रेताः पितर उच्यन्ते। येऽस्माल्लोकाल्लोकान्तरं गतास्ते प्रेताः पितरः। त एतेऽपि श्रुतिषु बहुधा श्रूयन्ते। तथा हि—मुमूर्षुपुरुषसविधे उच्चारणीय एको मन्त्रः—

संगच्छस्व पितृभिः संयमेन इष्टापूर्तेन परमे व्योमन्।
हित्वा यावद्यं पुनरस्तमेहि संगच्छस्व तन्वा सुवर्चाः॥

अत्र स्पष्टं मृतस्य दिव्यपितृभिः संगमनमाम्नातम्। यत्तु केचन पुत्रो जीवन्तमेव पितरं सम्बोधयतीति मन्त्रमिमं व्याचक्षते तदनुचितमेव, अवद्यं हित्वा इत्युपदेशस्य पुत्रकृतस्य पितरं प्रत्यनुचितत्वात्, अस्तिमहीति कथनस्य नितान्तमयोग्यत्वाच्च। तस्माद् मुमूर्षुसविधे एव प्रार्थनापरत्वेन मन्त्रोऽयं युज्यते।

पूषा त्वेतश्च्यावयतु प्रविद्वान् अनष्टपशुर्भुवनस्य गोपाः।
स त्वैतेभ्यः परिददत् पितृभ्योऽग्निर्देवेभ्यः सुविदत्रियेभ्यः॥

अत्रापि पृथिव्या अधिष्ठाताग्निर्मृतस्य पितृलोकनयनाय प्रार्थ्यते।

यद्वोऽग्निरजहादेकमङ्गं पितृभ्यो गमयन् जातवेदाः।
तद्व एतत्पुनराप्याययामि साङ्गाः पितरः स्वर्गे मादयध्वम्॥

अत्राग्निना प्रज्वालितस्याङ्गस्य पुनराप्यायनं स्पष्टं श्रुतम्, यदधुनापि दशाहाभ्यन्तरे गात्रनिर्मापकपिण्डप्रधानरूपेण सर्वैरनुष्ठीयते। कियदुदाहरामि। शतशो मन्त्रेष्वेवं मृतानां पितृलोकगतिराम्नायते। "ये वै के चास्माल्लोकात् प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति" इति कौषीतकिब्राह्मणे मृतानां स्पष्टं चन्द्रलोकगतिराम्नाता। चन्द्रलोक एव च पितृलोकपदेनाख्यायत इति, "विधूर्ध्वभागे पितरो वसन्ति" इति सिद्धान्तशिरोमण्यादिषु स्पष्टमुक्तत्वात्। छान्दोग्योप-

निषत्स्वपि च देवयानपितृयाणमार्गौ स्फुटतरं विवृतौ। तत्रापि चन्द्रलोकगतिः पितृयाणमार्गे स्पष्टं श्रूयते। सजातीयाकर्षणसिद्धान्तमनुरुध्य चोपपत्त्यापीदं सिद्ध्यति। सर्वं हि वस्तु स्वसजातीयेन घनेन स्वाभिमुखमाकृष्यत इत्येव सजातीयाकर्षणसिद्धान्तः। स चाऽयं महाभाष्ये "स्थानेऽन्तरतमः" सूत्रे स्पष्टं विवृतः। यत्तु केचन पाश्चात्त्या विद्वांसो वदन्ति यदाकर्षण-सिद्धान्तोऽयं न्यूटनेनैवाविष्कृतः, इतः पूर्वमाकर्षणसिद्धान्तं न कोऽपि जानाति स्मेति तत्तेषां देशे न्यूटनेनैवाविष्कृतो भवतु नाम। अस्माकं तु श्रुतिषु तदनुगामिषु शास्त्रेषु च स्फुटमाकर्षण-सिद्धान्तो विवृतो दृश्यते। ज्योतिर्विदामग्रेसरैः श्रीभास्कराचार्यैश्च सुस्पष्टैरक्षरैर्भूम्यामाकर्षण-मस्तीति प्रतिपादितम्। बौद्धा हि मन्यन्ते स्म यद् भूमिरियं प्रतिक्षणमनेकयोजनानि नीचैः पततीति। यदा हि वयं स्फुटं पश्यामो यदस्माभिरुत्क्षिप्तो मृत्पिण्ड एकोऽस्माभिर्यावती शक्तिस्तत्र निहिता तस्याऽपगमे नीचैः पततीति तयैतावद्भारवती पृथिवी कथं निरालम्बा तिष्ठेदिति। यत्तु शेषकूर्मवराहादिकान् अवलम्बान् कल्पयन्ति तत्तु तैर्न मन्यते। अस्माकमपि च पुराणादिषु वैज्ञानिकरीत्याऽभिप्रायान्तरमेव तस्य वर्णनस्य व्याख्यायते। भवतु नामैतस्य बौद्धसिद्धान्तस्य खण्डनाय प्रवृत्तः श्रीभास्कराचार्य इदमुक्तवान्—

आकृष्टिशक्तिश्च मही तया यत्
खस्थं गुरुस्वाभिमुखं स्वशक्त्या।

आकृष्यते तत् पततीव भाति
समे समन्तात् क्व पतेदियं खे॥

अस्यायमभिप्रायो यत् पतनं नाम कस्यचिद्वस्तुनो न स्वाभाविको धर्मः, अपि त्वाक-र्षणपरिणतिभूत एव। अस्माभिः प्रहितं मृत्पिण्डादिकं भूमिरेव स्वाभिमुखमाकर्षति, तत्फलभूत-मेव तस्य पतनं दृश्यते। भूमेस्त्वाकर्षकं किमपि पिण्डान्तरं नास्ति, अपि त्वियमभितस्समे आकाशमण्डले स्थिता। आकाशे चाकर्षणशक्तिर्नास्तीति क्वेयं पततु। अत्र स्फुटैरक्षरैर्भूम्या-कर्षणसिद्धान्तो न्यूटनाद् बहुपूर्वजेन भास्कराचार्येण विवृतः। महाभाष्यकृता च सजातीया-कर्षणसिद्धान्तो विवृत इति पूर्वमुक्तमेव। श्रुतिष्वपि च—

अनवरणे इमे भूमी इयञ्चासौ च रोदसी।
किंस्विदत्रान्तराभूतं येनेमे विधृते उभे॥
विष्णुना विधृते भूमिरिति वत्सस्य वेदना।

## वेदेषु पितरः

अत्र विष्णुनामकेनादित्यानामन्यतमेन भूमिर्विधृतेति स्फुटमेवोक्तम्। मन्त्रश्चात्र विषये प्रमाणतया ब्राह्मणेनोपन्यस्तः। आस्तामियमप्रकृतकथा। अनेन सजातीयाकर्षणसिद्धान्तेनापि इतः प्रस्थितस्य जीवस्य चन्द्रलोकगमनमेव सिद्ध्यति। मृतस्य सूक्ष्मं शरीरं स्थूलशरीरं विहाय निष्क्राम्यति। तत्र च मन एव प्रधानं भवति मनश्चेदं चन्द्रमण्डलस्यैवांश इति श्रुतिस्मृत्यादिषु स्फुटीकृतम्। ततश्च चन्द्रमण्डलांशस्य मनसश्चन्द्राभिमुखी गतिः स्फुटं प्रसिद्ध्यत्येव। यैस्तु तपो-ब्रह्मचर्यादिना स्वस्य प्राणशक्तिः प्रवर्द्धिता ते चन्द्रमसं न गच्छन्ति, अपि तु जगतां प्राणभूतस्य सूर्यस्याकर्षणात् सूर्यमण्डलमेव यान्तीत्यपि छान्दोग्योपनिषत्सु स्पष्टमाख्यातम्। येषाञ्च धनभूम्यादि-वासनावशीकृतानां भूम्यामेव विशेषेण सम्बन्धस्तेऽत्रैव पुनः पुनर्जायन्ते म्रियन्ते चेति "जायस्व म्रियस्व" इत्येतत् तृतीयस्थानमिति छान्दोग्ये समाम्नातम्। एषाञ्च त्रिविधानामपि श्राद्धेन तृप्तिः स्मृतिषु स्फुटमुक्ता—

देवो यदि पिता जातः शुभकर्मानुयोगतः।<br>
तस्यान्नममृतं भूत्वा देवत्वेऽप्यनुगच्छति ॥ इत्यादिना।

एते च मृता जीवा द्वादशभिर्मासैश्चन्द्रलोकं प्राप्नुवन्तीति तावत् प्रतिमासं श्राद्धानि क्रियन्ते। दिव्यपितृभिः सङ्गतानां तु वर्षान्ते सपिण्डनं क्रियते। तदनु प्रत्यब्दं श्राद्धम्। श्राद्धे च या प्रक्रिया सा सर्वाऽपि वैज्ञानिकरीत्या व्याख्यातुं शक्यते, परमिदानीं व्याख्यानसमयो मे पूर्णतां गत इति किञ्चिदेव प्रतिपाद्य विषयमिममुपसंहरामि। ये च भेदा नान्दीमुखाश्रुमुखाद-यस्तेमृतपितृणामपि स्मृतिपुराणादिषु प्रतिपादिताः—

पिता पितामहश्चैव तथैव प्रपितामहः।<br>
त्रयोऽप्यश्रुमुखा ह्येते पितरः परिकीर्तिताः ॥<br>
तेभ्यः पूर्वतरा ये च प्रज्ञावन्तः सुखोचिताः।<br>
ते तु नान्दीमुखा नान्दीसमृद्धिरिति कथ्यते ॥ इत्यादिना।

(ब्रह्मपुराणे)

एवं ये सोमपानं कृतवन्तस्ते सोमपा इत्याद्यपि च तत्र तत्र विवृतमिति समयस्य पूर्णत्वान्नेदानीं विवरीतुं शक्यते। तदित्थं श्रुतिब्राह्मणादिकं प्राधान्येनावलम्ब्य पितृतत्त्वं संक्षेपेण विवेचितमिति क्षाम्यन्तु विद्वद्वराः॥



# श्रौतयागप्रक्रियाविमर्शः

डॉ० श्रीमनोहरलालद्विवेदी, सरस्वतीभवनम् , वाराणसी ।

सर्वप्रथममत्र यज्ञीयपरम्परामुद्दिश्य किञ्चिन्निवेद्यते। विद्यते पुनर्जन्मवादो भारतीय-दर्शनसम्मतः । लोकेऽस्मिन् प्राणिनो जन्मजरामृत्यूंश्च लभन्ते । एकस्य जन्मनोऽनन्तरं जन्मान्तरमाप्नुवन्ति । देहिनो जीर्णवस्त्रवत्पूर्वशरीरं परित्यज्य शरीरान्तरं स्वीकुर्वन्ति । यद्यपि ते पाञ्चभौतिकानि शरीराणि परित्यजन्ति, तथापि विविधसंस्कारावच्छिन्नानि सूक्ष्मशरीराणिताननुसरन्त्येव । संस्काराश्चैते स्वकृतपापपुण्यप्रभावोद्भूता एव परिगण्यन्ते ।

श्रुतिस्मृतिसदाचारप्रतिपादितकर्मणां प्रसादेन पुण्यस्य, एतद्विरुद्धकर्माचरणेन च पापस्य सञ्चयः श्रूयते । तत्र पुण्यमाहात्म्येनोत्तमस्य पापप्रभावेण च हीनस्य जन्मनोऽवाप्तिः । अतः कर्मयोग एव पुनर्जन्मवादस्याधारशिला । सत्कर्मणो धर्मसञ्चयस्तेनैवोत्तरोत्तरमुत्तमलोकावाप्तिः । कर्मविधानविधाता धर्माधर्मनिर्णेता च सकलविद्याविज्ञातो वेद एव । अतः श्रेयःप्राप्त्यभिलाषिणे मानवाय वेदानुकूलानुष्ठानमेवेह परममुन्नतिसाधनम् ।

वेदश्च "स्वर्गकामो यजेत", "अग्निहोत्रं जुहुयात् स्वर्गकामः", "स्वाराज्यकामो राजसूयेन यजेत", "वाजपेयेनेष्ट्वा सम्राड् भवति", "उद्भिदा यजेत पशुकामः", "श्येनेनाभिचरन् यजेत" इत्यादिविविधवाक्यसमूहै रैहिकामुष्मिकसकलकल्याणलाभाय कर्मानुष्ठानानि प्राणिनां पुरः प्रापयति । प्रत्यनुष्ठानं पृथक् पृथक् फलानुबन्धिन्यो युक्तयो विद्यन्ते । तद्विवरणानि च ब्राह्मणग्रन्थेषु परिस्फुरन्ति । तासां प्रक्रियाणां विशदा व्याख्या समस्ताः पद्धतयश्च सकलेषु श्रौतसूत्रेषु दृष्टिपथमायान्ति । सूक्ष्मेक्षिकैः सूत्रकारैर्वेदरहस्यान्यात्मसात्कृत्वा ब्राह्मणग्रन्थतत्त्वान्यालोड्य च मानवकल्याणाय कर्मानुष्ठानकल्पानां साङ्गोपाङ्गं विवेचनं प्रस्तूयते । अतः श्रौतसूत्रप्रदर्शितश्रौतयागप्रक्रियावबोधाय श्रौतसूत्रज्ञानमेव शरणम् ।

अपौरुषेयास्वनेकासु संहितासु बहुषु स्थलेषु विकीर्णानि ऋत्विग्देवताबर्हिध्मप्रभृतीनि यागसाधनानि समवलोक्यन्ते । परं तत्र तानि शृङ्खलाविरहितान्येव सन्ति । विध्यर्थवादेतिहासादिसनाथेषु संहितातिरिक्तेषु ब्राह्मणनामविभूषितेषु वेदग्रन्थेषु समुपबृंहिता यागसामग्री नयनगोचरतामायाति । अरण्यानामेकान्तपरिसरेषु जीवनपरमरहस्यमवलम्ब्याध्ययनाध्यापन-

मननविषयसमर्थानां ग्रन्थसमूहानामारण्यकमिति नाम, ब्रह्मानन्दावाप्तिसाधनभूतास्तूपनिषदः। तासामाध्यात्मिकतत्त्वयुक्तत्वाद्वेदान्त इति नामान्तरम्।

परमेतेषां वेदानां शब्दार्थरहस्यावबोधनसामर्थ्यन्तु वेदाङ्गेष्वेव परिनिष्ठितम्। तानि च वेदाङ्गानि—शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्यौतिषमिति नाम्ना षट्संख्यामितानि। एतेषु वेदाङ्गेषु कल्पस्य द्वितीयं स्थानम्। "हस्तौ कल्पोऽथ पठ्यते" इति वदता भगवता पाणिनीयशिक्षाकृता कल्पस्य वेदहस्तात्मकत्वं कल्पितम्। कल्पनाम्ना च श्रौतसूत्रगृह्यसूत्रधर्मसूत्राणि पुरत आयान्ति। एतेषां वेदादारभ्य कल्पपर्यन्तानां सत्यपि समवाये तत्र तत्र प्रयुक्तवाक्यार्थनिर्णयावसरे समुपस्थितेष्वनेकेषु संशयेषु कर्तव्याकर्तव्यनिर्णयावाप्त्यै सहस्राधिकरणोपबृंहितं भगवता जैमिनिना प्रणीतं मीमांसाशास्त्रम्।

श्रौतसूत्रनिर्दिष्टपथा क्रियमाणा अग्निहोत्रहवन-मित्रविन्दा-ज्योतिष्टोम-राजसूयाश्वमेधप्रभृतयः श्रौतयागाः। गृह्यसूत्रोक्तमार्गानुसारं समनुष्ठेयानि तत्रौपासनहोमवैश्वदेवपार्वणादीनि स्मार्तानुष्ठानानि।

## श्रौताग्निपरिग्रहसमयो यागसंस्था च

समधिगतवेदविद्यावता द्विजेन "आवसथ्याधानं दारकाले" इति पारस्कराचार्यवचनमनुसृत्य पाणिग्रहणसमकालमेव स्मार्ताग्निः परिग्राह्यः। तस्मिन्नग्नौ चौपासनहोम-वैश्वदेव-पार्वण-अष्टका-मासिश्राद्ध-श्रवणाकर्म-शूलगवाभिधाः सप्त पाकसंस्थाः समनुष्ठेयाः। अथ गच्छता कालक्रमेण "जातपुत्रः कृष्णकेशः श्रौताग्निमादधीत" इत्यादिश्रुतिमनुसृत्य नियतकाले देशविशेषे पुरुषविशेषेण सपत्नीकेन श्रौताग्न्याधानम्। श्रौताग्निपरिगृहीतेनैव यजमानेनाग्निहोत्रहवन-दर्शपौर्णमास-आग्रहायण-चातुर्मास्य-निरूढपशुबन्ध-सौत्रामणी-पिण्डपितृयज्ञाभिधाः सप्त हविःसंस्थाः समनुष्ठेयाः। ततोऽग्निष्टोम-अत्यग्निष्टोम-उक्थ्य-षोडशी-वाजपेय-अतिरात्र-अप्तोर्यामाभिधानां सप्त सोमसंस्थानामनुष्ठानं विधेयम्।

## साग्निचित्सार्वपृष्ठाप्तोर्यामयागप्रमुखाः

उपरिनिर्दिष्टेषु यागेष्वमरावत्यां चैत्रे मासि २०२० वैक्रमे वर्षे सप्तम्या अन्तिमायाश्च सोमसंस्थाया अप्तोर्यामनामिकाया अनुष्ठानमासीत्। तदपि साग्निचयनं, ससर्वपृष्ठञ्च। कालेऽस्मिंल्लुप्तप्रायायामपि श्रौतयागपरम्परायां येषां महानुभावानां सततप्रयत्नेन सफलतामवाप्तोऽयं यागस्ते विदितयशसो नारायणगुरुनाम्ना विश्रुताः। एतेषां पूर्ववयःप्रसिद्धं धर्मराजमठीकर

इति नाम श्रूयते। एषामयोध्यानगरी जन्मस्थानम्। सांसारिकप्रपञ्चपरिभूतान्तःकरणै रेभिर्बाल्य-काल एव स्वगृहं परित्यक्तम्। तत्रैवायोध्यायां काश्यां चैभिर्वेदशास्त्राणि समधीतानि। ततो माहुलीनगर्यां निवसतामेतेषां नारायणगुरुमाहुलीकरेत्याख्यं नाम लोकैरवगतम्। अमरावत्यां नागमठे निवसन्तः श्रीशङ्करगुरुनाम्ना प्रसिद्धा एतेषामध्यात्मगुरवः।

चत्वारिंशद्वर्षाधिककालादेषां सञ्चालकत्वे यागपरम्परा प्रचलिता विराजते। आरम्भकाल एभिः स्मार्तयागानुष्ठानमाचरितम्। सुदैवसाहाय्येन कियता कालेनैतेषां काशीस्थश्रीवल्लभरामशालि-ग्रामसाङ्गवेदविद्यालयीयश्रौतस्मार्ताध्यापकैर्लेखकस्य गुरुचरणैः श्रीगणेशदीक्षितमहोदयैः सम्मेलनं सञ्जातम्। उभयोर्विचारविनिमयफलीभूतः प्रतिवर्षमविच्छिन्नस्य श्रौतयागानुष्ठानस्य विनिर्णयः समजनि।

सपत्नीकाग्निपरिगृहीतयजमानमन्तरा श्रौतयागा न साधयितुं शक्यन्त इति विचिन्वद्भ्या-माभ्यां नासिकक्षेत्रवास्तव्यो महाराष्ट्रकुलजन्मा अभ्रेकरोपाह्वो हरिशङ्करशर्मा परिगृहीताग्निर्यजमान उपलब्धः। त्रयाणामेतेषां परस्परं सहयोगभावनया सर्वा अपि सोमयागसंस्था दृष्टिपथमवतीर्णाः।

## अग्निचयनम्

वर्षेऽस्मिन् समाचरितस्य साग्निचित्सार्वपृष्ठाप्तोर्यामनामाभिधस्य यागस्य परिचयस्त्वेवंभूतो वेदशास्त्रविश्रुतः श्रूयते। यत्र प्रकारविशेषेणेष्टकानां चयनं विधाय चितिर्निर्मीयते सोऽग्निचयन-नामको यागः। तस्याङ्गी च सोमसंस्थान्तर्गतोऽप्तोर्यामनामको यागः। अत्राग्निचयनपदा-न्तर्गतेनाग्निशब्देनापाततो वह्निरूपोऽर्थः परिस्फुरति सुमेधसां चेतसि। किन्त्वत्र "अग्निं चेष्य-माणोऽग्निं प्रोक्षति" इति कात्यायनमतानुसारम् "अग्निं चित्वा अग्निमारोहन्ति" इति शतपथ-ब्राह्मणस्वारस्येन च वह्निरूपस्यार्थस्यासंगतिः, वह्नौ दाहकत्वस्य विद्यमानत्वादारोहणव्यापारस्य तत्रा-शक्यत्वात्। एतदर्थम् "इष्टकाभिरग्निं चिनोतीति चारोहणप्रोक्षणे स्थलस्योच्यते" इति कात्यायन-शतपथप्रभृतीनां स्वारस्यं विशदीकुर्वतां कात्यायनश्रौतसूत्रभाष्यरचयितॄणां कर्काचार्याणां कथना-नुसारमग्न्याधाररूपाणामिष्टकानां परिग्रहेणासंगतेरनवकाशः।

## चितेश्चयनम्

अत्राग्निचयनयागे सोमयागसदृशीमुत्तरवेदिमकृत्वोत्तरवेदिस्थाने इष्टकानां चितिर्विधीयते। एतदर्थं पूर्वमेव विधिपुरस्सरमिष्टका निर्मीयन्ते। तासामिष्टकानां मानमूलकाश्चतुर्दशभेदा भवन्ति। इष्टकानां संख्या (११९७०) सप्तत्युत्तरमेकशतमेकादशसहस्रम्। सर्वासामपीष्टकानां

नामानि पृथक्पृथङ्निर्दिष्टानि। आसामुपधानप्रकारश्च विशिष्टरूपः। तत्र विधिविहितदिङ्मुखेनाध्वर्युणा मन्त्रोच्चारणपूर्वकमिष्टका उपधीयन्ते।

## सुपर्णचितिः

नाम्ना सुपर्णचितिद्रोणचितिश्येनचित्यादीनामनेकासां चितीनां चयनविधाने विद्यमानेऽपि विशिष्टफलत्वात्याः सुपर्णचितेरेव चयनमत्र प्रकृतयागे समाचरितम्। अस्याश्चितेर्वैशिष्ट्यं महता विस्तरेण शतपथब्राह्मणे प्रपञ्चितम्। एतस्याश्चितेः पञ्च प्रस्तारा विद्यन्ते। चितेरङ्गानि त्रीणि भवन्ति। आत्मा, पक्षौ, पुच्छश्च। आत्मन आयामो विस्तारश्चाहिताग्निहस्तमानेन दशहस्तपरिमितः। आत्मन एव संलग्नौ दक्षिणोत्तरौ द्वौ पक्षौ भवतः। उभयोरप्येतयोरायामः पञ्चहस्तात्मको विस्तारश्च षड्हस्तात्मकः। आत्मनः पश्चिमभागसंलग्नस्य पुच्छस्यायामोऽपि पञ्चहस्तमात्रः। विस्तारस्तु सार्द्धपञ्चहस्तपरिमितः। एतस्याश्चितेः साङ्गोपाङ्गं क्षेत्रफलं तु सार्द्धसप्तपुरुषमितम्। एकस्य प्रस्तारस्योपर्येवापरः प्रस्तारश्चीयते। एवं पञ्च प्रस्ताराणामेका चितिरुच्यते। आहवनीयस्थानभूतैषा चितिर्विराजते। तस्यामेवाग्निमुपधाय यागाः क्रियन्ते। प्रधानयागा अप्यत्रैव विधीयन्ते।

## पृष्ठ्यस्वरूपं सोमयागश्च

स्पृशति प्राप्नोति स्वर्गो लोकोऽनेन सामषट्केनेति पृष्ठ्यः। "स्वर्गं लोकमस्पृशंस्तस्मात्पृष्ठ्यः" इति शतपथब्राह्मणवचनमादृत्य पृष्ठ्यस्वरूपमत्रधार्यम्। अस्मिन् यागे बृहद्रथन्तरादीनां सर्वेषां पृष्ठ्यानां समवायः। अथ विधिविहिते काले कौत्सगोत्रवतो ब्राह्मणाद् गोविनिमयेन वेदशास्त्रविख्यातस्य दिव्यौषधिस्वरूपस्य लतात्मकस्य सोमस्य क्रयणम्। सम्प्रत्यन्तर्भूतायाः सोमलतायाः स्थाने विधिप्रतिपादिता पूतिकाभिधा लता उपयुज्यते। प्रतिनिधिभूताया अपि पूतिकाया विध्युच्चारणकाले सोम इत्येव व्यवहारः साम्प्रदायिकः। तस्या एव रसं निष्कास्य ऋत्विग्द्वारा यागा विधीयन्ते। एतदर्थमेवास्य यागस्य सोमयाग इत्यन्वर्थकं नाम।

## अप्तोर्यामयागस्य वैशिष्ट्यम्

पुरा किल सर्जनकाले प्रजापतिना सर्वेऽपि देवाः सृष्टाः, तत्समकालमेव तेभ्यो देवेभ्योऽन्नपानं निरमायि। तदन्नपानञ्च यज्ञ एव। ते च यज्ञाः सोमसंस्थास्वरूपाः सप्त। यद्यपि तेन प्रजापतिनाग्निष्टोमादारभ्यातिरात्रान्ताः षट्संख्यामिताः सोमयागाः सृष्टाः, तथापि

देवानां सन्तुष्टिर्नावलोकिता। समुत्पन्नास्ते यागा देवसन्तर्पणसमर्था नाभूवन्। ततस्तेन प्रजापतिनाऽप्तोर्यामनामिका सप्तमी सोमसंस्था निरमायि। अथाप्तोर्यामनामकं यागमुपलभ्य सर्वेऽपि देवाः परमां तुष्टिमवापुरिति शाङ्खायनश्रौतसूत्रोक्ताख्यायिकात्रानुसन्धेया। अयमप्तोर्यामनामको यागः सोमसंस्थान्तर्गतस्यातिरात्राभिधस्य यागस्य विकृतिः।

## श्रौतयागेषु ऋत्विजां संख्यानियमः

समस्तेषु श्रौतयागेषु विध्यनुसारमृत्विजां संख्या नियमिता। यथाग्निहोत्रहवने केवलमेकैव, दर्शपौर्णमासादिनित्ययागेषु मित्रविन्दादिकाम्ययागेषु च चत्वार ऋत्विजः। चातुर्मास्ययागे पञ्चर्त्विजः। षड्ऋत्विजः सौत्रामण्याम्। अग्निष्टोमप्रभृतिषु सोमयागेषु ततोऽग्रे जायमानेषु समस्तेषु यागेषु सत्रादिषु च प्रधानर्त्विजां संख्या षोडश प्रकृतयागस्य सोमयागत्वादत्रापि सा संख्या षोडशैव। अत्र ब्रह्मोद्गातृहोत्रध्वर्यवश्चत्वारो गणाः। प्रत्येकस्मिन् गणे चत्वार ऋत्विजः। उत्तरोत्तरं तेषु कार्यपददक्षिणादिक्रममवलम्ब्य गौणत्वम्

## ऋत्विग्गणस्तत्संख्या नामानि च

| | | | |
|---|---|---|---|
| १. ब्रह्मगणः | २. उद्गातृगणः | ३. होतृगणः | ४. अध्वर्युगणः |
| १. ब्रह्मा | १. उद्गाता | १. होता | १. अध्वर्युः |
| २. ब्राह्मणाच्छंसी | २. प्रस्तोता | २. मैत्रावरुणः | २. प्रतिप्रस्थाता |
| ३. आग्नीध्रः | ३. प्रतिहर्ता | ३. अच्छावाकः | ३. नेष्टा |
| ४. पोता | ४. सुब्रह्मण्यः | ४. ग्रावस्तुत् | ३. उन्नेता |

## ऋत्विग्भ्यो दक्षिणानियमः

अत्राङ्काङ्कितेन लेखनक्रमेण दक्षिणाविभागोऽपि निश्चितः। प्रकृतयागे शतं गावो दक्षिणाः। तत्र गणेषु प्राथमिकेभ्यश्चतुर्भ्यः प्रत्येकं द्वादश गावः प्रदीयन्ते। ते चत्वारोऽपि दक्षिणाक्रममवलम्ब्य पूर्णिन उच्यन्ते। द्वितीयेभ्यश्चतुर्भ्यः प्रत्येकमर्पणीयानां गवां संख्या षट्, नाम्ना च तेऽर्द्धिनः। तृतीयेभ्यश्चतुर्भ्यः प्रत्येकं चतस्रो गावोऽर्पणीयाः, नाम्ना च ते तृतीयिनः। अन्तिमेभ्यश्चतुर्भ्यस्तिस्रो गावः प्रत्येकं प्रदातव्याः, नाम्ना च ते पादिन इति समाख्याताः। एवंरूपेण शतगवदक्षिणायाः सविभागमर्पणम्। एतदतिरिक्ता अन्येऽपि केचन ऋत्विजो

भवन्ति। यथा दश चमसाध्वर्यवः, सोमप्रवाक एकः, त्रय उपगातारः, एकः सदस्यः, एक एवात्रेयः। पूर्वोक्तनिश्चितदक्षिणायाः पृथग्रूपेणैतेभ्यो दक्षिणादानम्।

## श्रौतयागे सकलवेदानामुपयोगः

"यज्ञं व्याख्यास्यामः स त्रिभिर्वेदैः" इत्यापस्तम्बवचनानुसारं सोमयागमारभ्यैव त्रयाणां वेदानामुपयोगः। तत्राध्वर्युगणो यजुर्वेदवित्, ऋग्वेदज्ञातृत्वं होतृगणस्य, सामवेदानुसारमुद्गातृगणकार्यम्, ब्रह्मणा च सर्वैरनुष्ठितानां कार्याणां कृताकृतावेक्षणम्। स च यजमानशाखानुसारं सकलमपि स्वीयं यागकार्यं सम्पादयति। गोपथब्राह्मणवचनमालम्ब्य चायमथर्ववेदवित्।

प्रकृतोऽयं साग्निचित्सार्वपृष्ठाप्तोर्यामनामको यागः सप्तभिर्दिवसैः समाप्तिं यातः। तत्र प्रथमदिवसेऽग्निचयनयागसाधनीभूतेष्टकानिर्माणाय तत्प्रयुक्तप्राजापत्यपशुयागः। मङ्गलकामनया यजमानेन संकल्पपुरस्सरं गणपतिपूजनस्वस्तिवाचनप्रभृति पञ्चाङ्गं विधाय ब्रह्मादीनां षड्ऋत्विजां दैवमानुषात्मकं द्विविधमपि वरणं विहितम्। ततो वृतानामृत्विजां मधुपर्केणार्चनम्। अनन्तरं प्राजापत्यपश्वनुष्ठानम्। अस्मिन् कर्मणि शुक्लकृष्णरोमवानज आलब्धः। अन्ते शतब्राह्मणभोजनं सङ्कल्पितम्।

## उखासम्भरणम्

अग्निसंरक्षणाय मानविशिष्टा मृत्तिकानिर्मिता मञ्जूषा उखेत्युच्यते। आदौ तस्यामग्निं संस्थाप्यानन्तरं स एवाऽग्निर्गार्हपत्ये स्थाप्यते, पशुमस्तकसहितोखा च चितावुपधीयते। तस्या निर्माणविधिस्त्वेवम्। वल्मीकमृत्तिकामजलोमानि लौहचूर्णानि शर्करामश्ममचूर्णानि च पालाशकषायेण संयुज्य तत्रैव सिकतामुपकीर्योर्ध्वतस्तिर्यक्च प्रादेशमात्री चतुरस्रा निर्मिता। ततस्तस्या उखाया बहिर्भागे वितृतीयांशे वर्त्तिकैका तिरश्ची प्रतिदिशमेकैका पूर्वतनवर्त्तिकासंस्पृष्टा च विहिता। वर्त्तिकाया अग्रे स्तनाकारं चिह्नञ्च विधाय ततोऽग्नावुखा दीपिता।

## इष्टकानिर्माणम्

एतया सह तयैव मृत्तिकयाषाढाविश्वज्योतिस्संज्ञका इष्टकाश्च निर्मिताः। एतदतिरिक्ता, अध्यर्द्धा-अर्द्धपद्या-अर्द्धपादभागा-अर्द्धबृहती-अर्द्धोत्सेधार्द्धपद्या-अर्द्धोत्सेधापद्या-चतुर्भागा-जङ्घामात्री-त्रिग्राहिगी-पद्या-पादभागा-पादोनपद्या बृहती-वक्रासंज्ञका यथाकथितायाम-विस्ताराश्चतुर्दशप्रकारविशिष्टा इष्टकाः सम्पादिताः। संख्या चैतासां सप्तत्युत्तरमेकशतमेकादशसहस्रात्मिका। अत्रैवान्यासामष्टाविंशतिसंख्याकानामिष्टकानां योगेनाष्टनवत्युत्तरमेकशतमेकादश-

सहस्रं जायते। तत्र प्रथमचितावुपधीयमानेष्टकास्वेव गार्हपत्यचयनीयानामेकविंशतिसंख्याकानामपीष्टकानां समवायः। एवमेव पञ्चमचितिनिर्माणकथितास्विष्टकासु होत्रादिसमस्तधिष्ण्यासु चयनीयानामष्टसप्ततीष्टकानां संग्रहः सुधीभिर्बोधनीयः।

## श्रौतयागदीक्षा

द्वितीयदिवसे प्रकृतयागस्य निर्विघ्नपरिसमाप्तिकामनाव्यापृतेनाग्निपरिगृहीतेन यजमानेन प्रधानयागसङ्कल्पः, पञ्चाङ्गविधिश्च समाचरितः। यागविधिसम्पादनसमर्थानां षोडशर्त्विजां दैवमानुषात्मकं द्विविधमपि वरणं सम्पादितम्। वृताश्चर्त्विजस्ते मधुपर्कविधिना पूजिताः।

"क्रत्वर्थमपदिश्यान्यस्मै" इति कात्यायनश्रौतसूत्रानुसारं यथासमयमपेक्षिताया यागसामग्र्याः समुपस्थापनाय कमपि निपुणं जनं नियुज्य सपत्नीक आहिताग्निर्दीक्षाविधानाय प्रवर्तितः। अत्र दम्पत्योर्दीक्षासंस्कारः। तत्राध्वर्युणा यजमानस्य, प्रतिप्रस्थात्रा च पत्न्या दीक्षासंस्कारो विहितः। एतद्दीक्षाविधानं दीक्षाशालायां समाचरितम्। तत्रादौ यजमानस्य क्षौरसंस्कारः। अत्र संस्कारेषु केचन केवलं यजमानस्य। केचन केवलं पत्न्याः। केचन द्वयोरपि। यथा क्षौरसंस्कारो यजमानस्य। शिरसि जालबन्धनं पत्न्याः। अञ्जनादिकं तूभयोः।

## दीक्षणीयेष्टिविधानम्

अस्यामिष्टावाग्नावैष्णवदेवताक एकादशकपालेषु पुरोडाशः। आदित्येभ्यो घृतेऽधिश्रितश्चरुः। अत्र प्रस्तोतृकर्तृकस्ताक्ष्यसामपाठः। दम्पत्योरक्षिस्वञ्जनम्। सप्तभिः साग्रैः कुशतृणैस्तयोः शरीरपावनम्। तदनन्तरमुभयोर्मुष्टिबन्धनविधिः। अस्मिन् कर्मणि हस्तयोरङ्गुष्ठप्रदेशिन्यौ विहाय सर्वासामप्यङ्गुलीनां वस्त्रेण वेष्टनपुरस्सरं बन्धनम्। अधुनारभ्य बद्धमुष्टिभ्यामेव दम्पतिभ्यां सकलानि दैहिककार्याणि विधातव्यानि। तत औद्ग्रहणहोमः। कृष्णाजिनदीक्षानन्तरं मेखलाबन्धनम्। यजमानमस्तक उष्णीषबन्धनम्। पत्न्याः शिरसि जालबन्धनम्। सत्यामावश्यकतायां कण्डूयनाय यजमानस्योपवस्त्रप्रान्ते कृष्णमृगस्य शृङ्गबन्धनम्। पत्न्याश्चोत्तरीयप्रान्ते प्रादेशपरिमितं यज्ञकाष्ठशङ्कुबन्धनम्। यजमानेन स्वमुखपरिमितमौदुम्बरदण्डग्रहणम्। एतावत्पर्यन्तं दीक्षाविधानम्।

## दीक्षितनियमाः

ततो दम्पतिभ्यां परिपालनीयाः केचन नियमाः सूर्यास्तं यावद्वाग्यमनम्। अस्तमिते च तद्विसर्गः। सत्यं मधुरं सुसंस्कृतं च सम्भाषणीयम्। सत्यामनिवार्यपरिस्थितावेव त्रैवर्णिकेन वार्ता-

लापव्यवहारः। दक्षिणेन विहारं दीक्षितागारे विहरणम्। अविच्छिन्नं ब्रह्मचर्यपरिपालनम्। मदन्तीसञ्ज्ञकेनोष्णोदकेनैव दैहिककार्यनिवृत्तिः। आहाराय केवलं पयोग्रहणम्। तदपि प्रथमेऽहन्ये-कस्या गोरेकस्मादेव स्तनान्निर्गतं पयः। तच्च द्विधा विभज्यार्धं यजमानाय, अर्द्धं च पत्न्यै। एव-मेव द्वितीये दिवसे द्विस्तननिर्गतम्, तृतीयेऽहनि च त्रिस्तननिर्गतं पयः। ततः सुत्याहे हविश्शेष-ग्रहणम्। आतपे न व्रजेत्। नक्तमेव मूत्रपुरीषोत्सर्गः। सत्यनिवार्ये दिवा च छायायाम्। न कुत्रचन प्रवसेत्। केवलं वनीवाहननिमित्तमेव यथासमयं यायात्। आह्निकं कर्म न कुर्यात्। न कञ्चनाभिवादयेत्। न कमपि प्रत्युत्तिष्ठेत्। एतदतिरिक्ता अन्येऽपि विधिप्रतिपादिताः साधारण-नियमाः पालनीयाः। दीक्षतयजमानं प्रति सर्वेषां मानवानां परिरक्षणीया नियमाः—अग्निसेवनपरि-पूतस्य यजमानस्य स्पर्शनिषेधः। एतस्याभिधानं न वाच्यम्। दीक्षितवासांसि न परिधेयानि। आहिताग्नेरशुभं कथमपि न कल्पनीयम्। दीक्षासंस्कारानन्तरं जायमानावभृथयागं यावन्निर्दिष्टानां नियमानां सर्वैरपि परिपालनम्। अथ सायं प्रतिप्रस्थात्रा दीक्षितोऽयं ब्राह्मण इति यागभूमावुच्चै-र्निवेदितम्।

ततो यजमानेन स्वकण्ठदेशे नाभिमात्रावलम्बि वर्तुलाकारं सौवर्णं रुक्म धारितम्। समनन्तरमेवाग्निसहितां शिक्यस्थामुखामपि कण्ठे धारयित्वा अवतार्य च पुरः स्थापितायामासन्द्यां स्थापितवान्। उखास्थं भस्मोद्वपनं सम्पाद्य विष्णुक्रमणं वात्सर्योपस्थानं च विहितम्। दीक्षाकाल एव यागोपयुक्तसाधनपुञ्जसंचयार्थं प्रयाणरूपं वनीवाहनसंज्ञकं कर्म समाचरितम्। एतत्कार्यपूर्त्यै साग्निकेनाहिताग्निना यागसंचालकस्य सविधे सविधि प्रस्थितम्।

## महावीरसम्भरणम्

एतच्च प्रवर्ग्यापरपर्यायप्रसिद्धं कर्म। एतद्विधानाय मृत्तिकादिद्रव्येणाज्याधारम् उलूखलाकृति प्रादेशपरिमितमुच्चं मेखलाविशिष्टं मध्यसंगृहीतं गर्तवच्च यथोक्तं पात्रं निर्मीयते। तत्पात्रनिर्माणरूपो विधिरत्र विहितः। ततो यथाकथितं यूपारोपणं वेदिमानं चितिनिर्माणस्थान-मानञ्च। अस्तमिते समये सपत्नीकेन यजमानेन पयोव्रतग्रहणं विहितम्। तदर्थमेकां गां शालानिकट-मानीय तस्या एकस्यैव स्तनस्य दुग्धं गृहीतम्। तच्च द्विधा विभज्य अर्धमध्वर्युणा गार्हपत्या-ग्नावधिश्रित्य यजमानाय, अवशिष्टं च प्रतिप्रस्थात्रा दक्षिणाग्नावधिश्रित्य पत्न्यै समर्पितम्। ताभ्यां च यथाविधि तत्पीतम्। एतावदेव दम्पत्योरहोरात्रस्याहार इत्यवधेयम्।

## गार्हपत्यचयनम्

अध्वर्युणा गार्हपत्यस्थण्डिलस्यैकविंशतिसंख्याभिरिष्टकाभिश्चयनमाचरितम्। ताश्चेष्टका अष्टौ वक्राः सप्त पद्याश्चतस्रोऽर्द्धवृत्त्यो द्वे अर्द्धपद्ये च भवन्ति। गार्हपत्यस्य विस्तारस्तु चतुररत्निमात्रो मण्डलाकारमण्डितः। ततश्चात्वालान्मृदमानीय गार्हपत्यचितिं विलिप्य तत्रौख्योऽग्निः संस्थापितः।

तृतीयदिवसे "प्रयान्ति स्वर्गमनयेति प्रायणीया" इत्याप्तवचनमनुसृत्य प्रायणीयेष्टिराराधिता। अस्यामिष्टावदितिः, पथ्यास्वस्ति, अग्निः, सविता, सोमश्चेति पञ्च देवता भवन्ति। तत्रादित्यै चरुरन्येभ्य आज्यमेव द्रव्यम्। हविष्कृताह्वानान्तामेतामिष्टिं समाप्य षड्गवं सीरं सज्जीकृत्य चितिनिर्माणस्थानस्वरूपाया अग्निक्षेत्रभूमेः कर्षणं कृतम्।

अथ कौत्सगोत्रेण ब्राह्मणेन समानीतो यागोपयुक्तो लतात्मकः सोमो गोविनिमयेन क्रीतः। ततोऽध्वर्युः क्रीतं सोमं शकटे निधायानडुद्भ्यामूढं शकटं शालानिकटं समानीय संस्थापितवान्। शकटात् सोममवतार्य यज्ञशालायां संस्थापितायामासन्द्यां रक्षितवान्। मधुपर्कार्चनविधिना सोमस्यार्चनम्। सोमसत्काराय चातिथ्येष्टेरनुष्ठानम्। यस्यामिष्टौ विष्णुदैवत्यो नवकपालेषु पुरोडाशो विहितः। .ततश्चात्वालमानादिकं कार्यम्।

## यागसमापनप्रतिज्ञा

अथ तानूनपत्रसंज्ञको विधिरनुष्ठितः। अस्मिन् कर्मणि सयजमाना ऋत्विजस्तानूनप्त्रसंज्ञकमाज्यं स्पृशन्ति। अनेन समन्त्रकाज्यस्पर्शरूपविधिना ऋत्विग्भिर्मिथो द्रोहेर्ष्याद्वेषादिरहितैरेकतानैर्यागविधानस्य साङ्गोपाङ्गं समाप्त्यर्थं सशपथं स्वीकृतिरुद्घोष्यते।

## प्रातः प्रवर्ग्यप्रचारः

एतदनुष्ठानं यजमानपत्न्या नावेक्षणीयमिति प्रथमं सर्वाण्यपि शालाद्वाराणि पिहितानि। अत्र प्रचण्डज्वालापुञ्जमण्डितेन वह्निना मण्डपदाहानिर्मास्त्विति हेतोरनुष्ठानमेतच्छालाया बहिर्देशेऽनुष्ठीयते। अस्मिन् कर्मणि हस्तमात्रविस्तारा अङ्गुलोत्सेधास्त्रयः स्थण्डिलरूपाः खरा निमीयन्ते। तेषु गार्हपत्यादुत्तरेण प्रथमः, आहवनीयादुत्तरेण द्वितीयः, अग्निशालाया दक्षिणद्वारनिकटे तृतीयश्च। तत आहवनीयं दक्षिणतो महावीरासन्दीं संस्थाप्य तस्यां महावीरद्वयं स्थापितम्। गार्हपत्यादादीप्तान् मुञ्जप्रवलान् खरे संस्थाप्य तत्राज्यपूरितं महावीरपात्रं स्थापितम्।

अथ होत्रा समुच्चारितेषु ऋङ्मन्त्रेषु प्रतिप्रणवं महावीरपात्रेऽध्वर्युः स्रुवेणाज्यमासिक्तवान्। अत्र प्रतिप्रस्थातृकर्तृकं रौहिणपुरोडाशनिर्माणम्। अध्वर्युणा च दक्षिणरौहिणपुरोडाशहोमः।

ततः शालाया दक्षिणद्वारनिकटे गोदोहनमजादोहनञ्च। परीशासधारितं साज्यं महावीरपात्रं गृहीत्वाध्वर्युप्रतिप्रस्थातृभ्यां शालाया बहिर्देशगमनम्। तत्रैकस्मिन् विपुले पात्रे महावीरपात्रस्थापनम्। उपयमन्या महावीरपात्रेऽजापयःप्रक्षेपः। अत्र सन्तप्ते घृतेऽजापयःप्रक्षेपसमकालमेव परमप्रचण्डा ज्वाला समुद्भवति। तस्यामवस्थायामपि प्रतप्ताज्यपूरिते महावीरपात्रेऽध्वर्युकर्तृकं सन्ततं पयःसेचनं प्रचलितमेव। ततः क्रमशः प्रशान्तायां ज्वालायां गोपयःप्रक्षेपः, ततः पूर्ववत्परीशासधारितेन महावीरपात्रेण सहाध्वर्युप्रतिप्रस्थातृभ्यां यज्ञशालायां समागत्य प्रवर्ग्यविधिः समापितः। तत उपसदिष्टिः। अत्राग्निसोमवरुणा देवताः। आज्यमेव द्रव्यम्।

## इष्टकाभिश्चितेश्चयनम्

अथाध्वर्युकर्तृकं प्रथमद्वितीयचित्योश्चयनम्। तत्र प्रथमायां चितौ सप्तविंशत्युत्तरं सहस्रद्वयमिष्टकाः। तासु सप्तसततिर्यजुष्मत्यः। एकोनत्रिंशदुत्तरमेकोनविंशतिशतं लोकम्पृणाः। द्वितीयायां चितावेकनवत्युत्तरमेकोनविंशतिशतमिष्टकाः। तत्रैकचत्वारिंशद् यजुष्मत्यः। पञ्चाशदुत्तरमेकोनविंशतिशतं लोकम्पृणाः। अथ सायं प्रवर्ग्यप्रचारः। सायमयःशयोपसदिष्टिश्च। अस्यां चितावग्न्युपधानं यावत्प्रत्यहमश्वपरिणयनविधानम्। चयनानन्तरं मृदा सन्धिपूरणविधिश्च।

चतुर्थदिवसे प्रातः प्रवर्ग्येण प्रचर्य रजःशयोपदिष्टिविधानम्। तत इष्टकाभिस्तृतीयचितिचयनम्। अस्यां तृतीयायां चिताविष्टकानां संख्या विंशत्युत्तरं सहस्रद्वयम्। तत्र सप्ततिसंख्यामिता यजुष्मत्यः। पञ्चाशदुत्तरमेकोनविंशतिशतञ्च लोकम्पृणाः। चयनानन्तरं चितेरुपस्थानम्। अथ चतुर्थचितेश्चयनम्। अस्यां चितौ समस्तानामिष्टकानां संख्या सप्तनवत्युत्तरमेकोनविंशतिशतात्मिका। तासु सप्तचत्वारिंशयजुष्मत्यः। पञ्चाशदुत्तरमेकोनविंशतिशतं लोकम्पृणाः। ततः पूर्ववन्मृत्तिकया सन्धिपूरणादिविधिः।

पञ्चम्याश्चितेश्चयनम्। अस्यां चिताविष्टकानां संख्याः सर्वाभ्यः पूर्वचितीष्टकाभ्योऽधिकाः। तच्च पञ्चत्रिंशदुत्तरमेकशतं सहस्रत्रयञ्च। तत्र पञ्चत्रिंशदुत्तरमेकशतं यजुष्मत्यः। सहस्रत्रयं च लोकम्पृणाः। चयनानन्तरं यजमानकर्तृकं चितेरुपस्थानम्। अश्वपरिणयनम्। ततोऽध्वर्युकर्तृकं सहस्रसंख्यापरिमितसुवर्णशकलैश्चितेः प्रोक्षणम्। अत्रैव प्रवर्ग्येण प्रचर्योपसदिष्टेरनुष्ठानम्।

## शतरुद्रियहवनम्

पञ्चमदिवसे शतरुद्रियहवनविधानाय चितेरुत्तरपक्षप्रान्ते संस्थापितासु जानुनाभिमुखमात्रासु परिश्रित्सु हवननिमित्तमग्निं संस्थाप्य गवेधुकासक्तुमिश्रितैर्जर्तिलैरर्कपर्णेनाखण्डरूपेण होमो

विधीयते। पूर्वमनुलोमक्रमेण हवनं समाप्य ततः प्रतिलोमक्रमेणापि होमो विहितः। अथ समाप्ते हवने तत्साधनभूतमर्कपत्रं चात्वाले प्रक्षिप्तम्। ततश्चितेः परिषेचनानन्तरमात्मविकर्षणम्।

## प्रवर्ग्योत्सादनविधिः

अस्मिन् विधौ प्रवर्ग्यकर्मण्युपयुक्तानां समस्तानामासन्दीसहितानां पात्राणां क्रमेण चितौ संस्थापनम्। ततोऽग्निप्रणयनम्। एतदर्थं प्रकृतिशालाया आहवनीयादग्निमुद्धृत्य यथाविधि चितौ स्थापनम्। इतः प्रभृति प्रकृतिशालास्थितस्याहवनीयस्य गार्हपत्यरूपता।

ततो हविर्द्धानप्रवर्तनं मण्डपमानं च। उपरवसंस्कारः। विधिपूर्वकं समानविनिर्मितस्य मुखचतुष्टयसहितस्यैकस्य गर्तस्य 'उपरव' इति नाम। एतस्योपरि काष्ठफलकद्वयं संस्थाप्यते। तयोः काष्ठफलकद्वयोरुपर्यनडुच्चर्मास्तीर्यते। तस्मिंश्च पाषाणस्थापनम्। अत्रैव पाषाणे सोमाभिषवो विधीयते। अथ यथाविहितेन विधिना सदोमण्डपनिर्माणम्। ततो वैश्वानरमारुतयागौ। अत्र वैश्वानराय द्वादशकपालेषु पुरोडाशः। मरुद्भ्यः सप्त पुरोडाशाः। प्रतिपुरोडाशं सप्त कपालानि। ततो वाजप्रसवीयहोमः एवं पार्थहोमराष्ट्रभृद्धोमवातहोमनवाहुतीनामनुष्ठानम्। ततः पञ्चमचिति-चयनादवशिष्टाभिरिष्टकाभिः सर्वासां धिष्ण्यानां चयनम्। अग्नीषोमीयवपायागानन्तरं पशुपुरो-डाशेन सह देवसूहविर्यागं विधायाग्नीषोमीयविधिसमापनम्।

## प्रधानदिवसविधिः

षष्ठदिवसे सुत्यादिवसकार्यारम्भः। मुख्यतमोऽयं दिवसः। अत्रापररात्रौ ऋत्विक्प्रबोधनम्। तत्रादौ लोकद्वारीसंज्ञकं सामगानम्। अथ सहस्रमन्त्रात्मकः प्रातरनुवाकपाठः। सवनीयनिर्वापः। उन्नेतृकर्तृकं पात्रयोजनम्। महाभिषवक्षुल्लकाभिषवसंज्ञकौ सोमाभिषवौ। ग्रहाणां ग्रहणं होमश्च। विप्रुड्ढोमप्रातःपवमानपाठप्रैषदानग्रहावेक्षणविधानानि। सुत्यापशूनामुपाकरणानि। अत्राग्नि-दैवत्योऽजः। ऐन्द्राग्नोऽजः। इन्द्रदेवताकोऽजः सारस्वती मेषी च। एवंविधानां चतुर्णां पशूनामुपाकरणानि। सप्तहोतॄणां वरणं वपायागाश्च। प्रातःसवनारम्भानन्तरं मण्डपाद्युपस्थानम्। प्रातःसवनीयपुरोडाशयागो ग्रहहोमश्च। शुक्रामन्थिग्रहप्रचारो ग्रहचमसभक्षणञ्च। अच्छावाकग्रह-प्रचार ऋतुग्रहप्रचारो होतुराज्यशस्त्रशंसनं होमश्च। माध्यन्दिनसवनीयनिर्वापपशुपुरोडाशौ, स्तोत्रोपाकरणं होतुः प्रउगशस्त्रशंसनं च। अथान्येषां स्तोत्रशस्त्रानन्तरं प्रातःसवनसमाप्तिः। अथोपस्थानाभिषवविधानानि। दधिघर्मप्रचारपशुपुरोडाशयागौ। ऋत्विग्भ्यो यथाविहितं दक्षिणादानम्।

## स्तोत्रशस्त्रारम्भः

तत्र प्रथमं होतुर्मरुत्वतीयशस्त्रं निष्केवल्यशस्त्रं च। अथ होतॄणां शस्त्रशंसनानि। अत्र रथन्तर-बृहद्-वैरूप्य-वैराज शाक्वर रैवत-पृष्ठेषु रथसंसारण-दुन्दुभिशब्द-व्यजनैरुद्गातृनामकस्र्त्विज ऊरावरणिं संस्थाप्याग्निमन्थनेन, सावकयोदपात्र्या, सांवाशिनेन चोपाकरणविधानानि। ततः शुक्राभिषवतृतीयसवनविधानानन्तरं माध्यन्दिनसवनसमापनम्।

अथ मण्डपाद्युपस्थानाङ्गयागप्रस्थितयागाः। सवनप्रार्थना। ऋत्विग्भिः सह यजमानेन पितृभ्यः पिण्डदानविधानम्। धिष्ण्यहोमः। स्तोत्रशस्त्रारम्भः। अत्र तृतीयसवनसमाप्तिः। तत उक्थ्यस्तोत्रस्तवनं शस्त्रशंसनं च। षोडशीसामशस्त्रयागाः। ततस्त्रयो रात्रिपर्यायाः। सन्धिस्तोत्र-स्तवनम्। आश्विनशस्त्रस्य यथानिर्दिष्टमन्त्रं यावच्छंसनम्। ततोऽग्निमविधानाय सूर्योदयस्य नितान्तमावश्यकत्वात्तत्प्रतीक्षायामेव षष्ठदिवसविधानसमाप्तिः।

सप्तमदिवसे संजाते किल प्राभातिके सूर्योदये प्रथमदिनावशिष्टस्याश्विनशस्त्रस्य शंसनम्। अथाप्तोर्यामस्यातिरिक्तस्तोत्रशस्त्रपाठः। पात्रप्रक्षालनविधिं विधायानुयाजाः। वाजिनयागद्रोण-कलशप्रचारौ। गार्हपत्याग्नौ पत्नीसंयाजानुष्ठानम्। समिष्टयजुःसंज्ञकहोमः।

## अवभृथयागः

अवभृथयागानुष्ठानम्। एतत्सम्पादनाय सोमलिप्तपात्रवारुणपुरोडाशाज्यादीन्यावश्यक-वस्तूनि समादाय यजमानसहिता ऋत्विजो नदीतटं प्रयान्ति। तत्र नदीजले वारुणयागं विधाय पुनरपि यथागतं यागभूमिं प्रत्यायाताः। विहारे समागत्योदयनीयेष्टेरनुष्ठानम्। आज्यभाग-यागानन्तरमग्निसोमसवितृपथ्यास्वस्तिभ्य आज्याहुतयः। पूर्वसम्पादितप्रायणीयेष्टेरवशिष्टचरुणाऽ-दितियागः।

## मैत्रावरुणी ( अनुबन्ध्या )

अयं मित्रावरुणदेवतानिमित्तकः पाशुको यागः। "अथात्र मैत्रावरुणीवशामनूबन्ध्यामाल-भते" इति शतपथोक्तदिशा गोरालम्भनं विहितमस्ति। कलिकाले च तद्वर्ज्यमिति प्रतिनिधि-रूपाजैवात्रालब्धा। तत उदवसानीयेष्टिः। अस्यामिष्टौ पञ्चकपालेषु आग्नेयः पुरोडाशः। ततो मैत्रावरुणः पयस्यायागः। ततः कर्माङ्गदेवताभ्यः कर्मनिवेदनम्। शुभकामनाशीर्वादाः। यज्ञसाङ्ग-तायै सहस्रब्राह्मणसन्तर्पणं संकल्प्य यागसमाप्तिर्निवेदिता। एवम्प्रकारेण परमाप्ताचारपरम्परापरि-प्राप्तस्य सप्तदिवसानुष्ठितस्य साग्निचित्सार्वपृष्ठाप्तोर्यामयागसम्बद्धकृत्यजातस्य दिग्दर्शनमिति शम्॥



# चित्तवृत्तिनिरोधस्य स्वरूपफलविचारः

श्रीदेवदत्तशर्मोपाध्यायः, वा० सं० वि० वि० दर्शनविभागाध्यक्षः ।

नाविदितं तत्रभवतां भवतां श्रीमतां यन्निखिलशिष्टविशिष्टवरिष्ठभारतीयपरिपन्निकषायमाणायामस्यां वाराणसेयसंस्कृतविश्वविद्यालयीयदर्शनपरिषदि श्रावणार्थं समागतानां निबन्धानां मध्येऽयमप्येकोऽन्यतमो निबन्धश्चित्तवृत्तिनिरोधसम्बन्धिस्वरूपफलविचारविषयकः ।

यद्यपि विषयोऽयं महान् गभीरः, परं दर्शनोत्तमस्य दर्शनराजस्य तात्त्विकदर्शनमूर्धन्यस्य लौकिकवैदिकजननिवहपरमोपकारकस्य मुनिप्रवरभगवत्पतञ्जलिमुनिप्रणीतस्य स्पृहणीयनामधेयस्य श्रद्धार्हस्य योगदर्शनस्य प्रधानतमो विषयः । एतत्परिज्ञानेनैव मनुष्यजीवनस्य साफल्यम् । नो चेत् पशु-पक्षि-मनुज-सरीसृपादिजीवनेषु को विशेषः । उक्तञ्च कैश्चिच्छास्त्रनिर्माणकुशलैर्विदुषांवरैः—"काकोऽपि जीवति चिराय बलिं च भुङ्क्ते" इति । अभिप्रायोऽयमस्य यद् अज्ञस्य पुरुषस्य काकस्य च जीवने न किमपि वैशिष्ट्यम् । अपि चोक्तं तत्र तत्र नीतिश्लोकेषु—

येषां न विद्या न तपो न दानं
ज्ञानं न शीलं न गुणो न धर्मः ।
ते मृत्युलोके भुवि भारभूता
मनुष्यरूपेण मृगाश्चरन्ति ॥ इति ।

अयमत्र सारांशोऽस्य पद्यस्य यद् अज्ञानिजनजीवने मृगादिजीवने च न कोऽपि विशेषलेशः । अन्यत्र चोक्तम्—"साक्षात् पशुः पुच्छविषाणहीनः" इति । अर्थादज्ञानी पुरुषः पशुरेव भवतीति । अतो नानवसरदोषदुष्टं मदीयमेतन्निबन्धनिबन्धनम्, अपि तु स्थाने परमोपयोगि सुखावहञ्च संसृतिसंसरणखेदपरितापितमानसानामनवरतं शाश्वतं सुखं प्रेप्सूनां जनानाम्, विशेषतश्च शैक्षणिकशिक्षातत्त्वपीयूषपानपवित्रीकृतान्तःकरणसंवलितानां विदुषाम्, शाश्वतसुखमधिगन्तुकामानां विद्याध्ययनव्रतपरायणानां व्रतिनां वैदिकाचारसमनुशीलनपटूनां बटूनां विद्यार्थिनां विद्याव्रतस्नातकानाञ्च । अतः प्रस्तूयते सम्प्रति मया स्वकीयो निबन्धः शुभाशयोऽभि-

लप्स्यते च यन्नीरक्षीरविवेकबुद्ध्या सारमाकृष्य तदुदर्केण संबोधयन्तश्च परान् सफलयिष्यन्ति मे नितरां सत्प्रयत्नं मनोरथञ्च तत्रभवन्तो महानुभावाः।

## चित्तवृत्तिनिरोधशब्दविचारः

इदमावश्यकं प्रतिभाति यच्चित्तवृत्तिनिरोधस्य स्वरूप-फलविचारात् प्राक् को नाम चित्तवृत्तिनिरोध इत्येव पुरा नूनं निबोधनीयं जिज्ञासुभिः समैः सूरिभिः। एवं सति तत्कृते च तत्र मयका योगिनामाराधनीयस्य तत्रभवतो भगवतः पतञ्जलेः कीर्तिरूपस्य योगशास्त्रस्य द्वितीयं सूत्रम्—"योगश्चित्तवृत्तिनिरोधः" इति पुरस्क्रियते। अर्थाच्चित्तवृत्तिनिरोधशब्दो योगशब्दस्यापरपर्याय इत्यत्र नास्ति शङ्कालवलेशशेषोऽपि। अयं योग एव समाधिशब्देनापि समुट्टङ्कितः सर्वत्र धरित्र्यामिति को न श्लाघ्यसूरिरुररीकरोति।

## स्वरूपविचारः

तत्र स्वरूपविचारप्रसङ्गे प्रथमतः प्रधानतयेदमवगन्तव्यं यच्चित्तवृत्तिनिरोधशब्दस्य स्वारसिकोऽर्थः क इति? तत्र स्वल्पसंस्कृतज्ञानभाजोऽपि जिज्ञासवः सुतरामवगन्तुमर्हन्ति यच्चित्तस्य (अन्तःकरणस्य, मनस इति यावत्) वृत्तीनाम् (व्यापाराणाम्=धाराणाम्=तरङ्गाणाम्) निरोधः (एकत्र व्यवस्थापनम्, अथवा अन्तर्लीनताप्रापणम्=अन्तर्लयनमिति यावत्)।

इदमतिरोहितं समेषां जनानां यत् केचिदालपन्ति यद् यथेयं बाह्या विद्युद् देदीप्यमाना राजतेतरां जगतीतलेऽस्मिन्, तथैवाभ्यन्तरे अर्थाच्छरीराभ्यन्तरेऽपि राजते काचिच्छोभना विशिष्टा विद्युत्, अथवा विद्युत्सदृशं किमपि विशिष्टं वस्तुजातम्। बहुशो विचारणायामन्ते इदमेवायाति यत् तद् विद्युद्रूपम् अथवा विद्युत्समं वस्तुजातं मन एव वरीवर्ति, यच्च चरीकर्ति शरीरजं सकलं क्लेशविलासम्, बरीभर्ति च विपुलं विचारम्, नरीनर्ति च ह्यनिशं प्राणिनः समग्रे सुकाये, जर्गृहीति च परोदीरितवृत्तजातम्। एवञ्च सति यथा विद्युतो धाराः (तरङ्गाः, आङ्गलभाषायाम् 'वेञ्ज' इत्याख्या इति यावद्) विकसन्ति सङ्कुचन्ति च, तथैव मनसोऽपि धारा वृत्त्याख्या विकसन्ति संकुचन्ति च। तासां धाराणामर्थाद् वृत्तीनां विरोधे, अर्थाद् एकत्र व्यवस्थापने मनोविकासो भवति, सैव निरोधावस्था, अथवा स एव मनोविकासः 'मनोविज्ञानम्' इति शब्देन व्यवह्रियते मननशीलैर्मनोविज्ञानिसमवायप्रसृतप्रथितयशोभिर्मनोविज्ञानशालिभिः पुरुषधौरेयैः। तासाञ्च धाराणाम् अर्थाद् वृत्तीनाम् अन्तर्लीनतावस्था, अथवा विलुप्ता-

वस्था 'आत्मविकासः' इति शब्देन, एवम् 'आत्मविज्ञानम्' इति शब्देन च व्यवह्रियते लौकिकैश्चर्मचक्षुभिस्तज्ज्ञानचातुर्यधुरीणैर्विज्ञानिशिरोमणिभिः ।

किञ्च, योगश्च द्विविधोऽत्र शास्त्रे प्रत्यभाणि—संप्रज्ञातः, असंप्रज्ञातश्च । तत्र सर्वासां वृत्तीनामनिरोधे अर्थात् कासाञ्चिद् वृत्तीनां निरोधे कासाञ्चिच्चानिरोधे, अर्थाद् यत्र "ध्याता ध्यानम्, ध्येयम्, अथवा ज्ञाता, ज्ञानम्, ज्ञेयम्" इति च त्रिपुट्यवस्था वेविदीति, तत्र संप्रज्ञातो योगः । यत्र च सर्वासां वृत्तीनां निरोधः, तत्र 'असंप्रज्ञातः' इति । अर्थात् तत्र सर्वासां वृत्तीनां निरोधात् किमपि लौकिकं ज्ञानं न भवतीति । "योगश्चित्तवृत्तिनिरोधः" इति सूत्रे सर्वशब्दस्यानुपादानात् पूर्वोक्तः 'संप्रज्ञातः, असंप्रज्ञातः' इत्युभयविधोऽपि योगः संगृहीतो भवति । तदुक्तं व्यासभाष्येऽपि—"सर्वशब्दाग्रहणात् संप्रज्ञातोऽपि योग इत्याख्यायते" इति । अस्य सर्वस्य संदर्भस्यैषोऽभिप्रायो यच्चित्तवृत्तिनिरोधः, योगः, समाधिरिति त्रयोऽपि शब्दाः परस्परं पर्यायवाचकाः । योगशब्देन च संप्रज्ञातः, असंप्रज्ञातश्चेत्युभयविधः समाधिर्गृह्यत इति ।

इदमप्यतिप्रासङ्गिकमेव यत् "चित्तवृत्तिनिरोधः" इत्यत्र समागतश्चित्तशब्दोऽपि नूनं विवेचनार्हः, तत्र व्यासभाष्ये चित्तविषये तत्रभवता व्यासेनाचर्चि—"चित्तं हि 'प्रख्या-'प्रवृत्ति-'स्थितिशीलत्वात् त्रिगुणम् । प्रख्यारूपं हि चित्तसत्त्वं रजस्तमोभ्यां संसृष्टमैश्वर्यविषयप्रियं भवति, तदेव तमसानुविद्धमधर्माज्ञानावैराग्यानैश्वर्योपगं भवति, तदेव प्रक्षीणमोहावरणं सर्वतः प्रद्योतमानमनुविद्धं रजोमात्रया धर्मज्ञानवैराग्यैश्वर्योपगं भवति, तदेव रजोलेशमलापेतं स्वरूपप्रतिष्ठं सत्त्वपुरुषान्यताख्यातिमात्रं धर्ममेघध्यानोपगं भवति, तत् परं प्रसंख्यानमाचक्षते ध्यायिनः" इति ।

इयमपि महत्येव त्रुटिः स्याद् यच्चित्तविवरणप्रसङ्गे तत्समानराशिश्चितिशब्दोऽपि वर्णनार्होऽवर्णितः स्यात् । यतश्चित्तचितिशक्त्योः संसर्गादेवायमनादिः संसारः समुत्पत्तिनिधनशीलः, अर्थादुत्पन्नविनष्टात्मकः सर्वैः प्राणिजातैरहर्निशं भृशमनुभूयमानो नितरां समस्तीति को न जानाति सहृदयः स्वल्पज्ञः क्षोदीयानपि विद्वान् । तदपि च व्यासेनैवेत्थं स्वशब्दैर्व्याहृतम्—"चितिशक्तिरपरिणामिन्यप्रतिसंक्रमा दर्शितविषया शुद्धा चानन्ता च" इति, "सत्त्वगुणात्मिका चेयम्, अतो विपरीता विवेकख्यातिः" इति च । अर्थात् सत्त्वगुणरूपा चेयं विवेकख्यातिः (विवेकदर्शिका स्थितिः. संप्रज्ञातसमाधिभूमिः, चितिशक्तितः सर्वथा भिन्ना) अतस्तस्यां विरक्तं चित्तं तामपि ख्यातिं निरुणद्धि, तदवस्थं संस्कारोपगं भवति । अर्थाद् विवेकख्यातितो विरक्तं चित्तं निरोधसंस्कारयुक्तं भवति । स निर्बीजः समाधिः । न तत्र किञ्चित् संप्रज्ञायत इत्यसंप्रज्ञातः ।

द्विविधः स योगश्चित्तवृत्तिनिरोधः। अर्थाद् यदा चित्तनिरोधसंस्कारयुक्तं भवति, तदा निर्बीजः समाधिर्भवति, स एव 'असंप्रज्ञातः' इति नामकः समाधिर्भवति। एवञ्च द्विविधो योगः—संप्रज्ञातोऽर्थात् सबीजः, असंप्रज्ञातोऽर्थाद् निर्बीज इति।

प्रसङ्गादागतमिदमप्यत्रोट्टङ्कनं सुतरां प्रासङ्गिकमेव भवति, यच्चित्तवृत्तीनां निरोधे चितिशक्तेर्जीवात्मनस्तदानीन्तनावस्थाकलनम्। तत्र नास्माभिः स्वकीयशब्दैराकल्यते, अपि तु सूत्रकारस्तत्रभवान् पतञ्जलिरेव स्वयं तत्कृते, अर्थात् तत्प्रकाशनाय सूत्रमेतद् व्याजहार— "तदा द्रष्टुः स्वरूपेऽवस्थानम्" इति। अत्र 'द्रष्टुः' इति पदस्य शक्नोति द्विधाऽन्वयो भवितुम्, अर्थात् स्वरूपेऽप्यन्वयो भवितुमर्हति, अवस्थानेऽपि चेति। एवञ्च सति यदाऽवस्थानेऽन्वयस्तदा द्रष्टुरवस्थानं स्वरूपे भवतीति वाक्यार्थः। अस्यायमर्थः—यत् तदा (वृत्तिनिरोधावस्था) जीवात्मनः (चितिशक्तेः) अवस्थानम् (अवस्थितिः) स्वरूपे (निजरूपे) भवतीति। अर्था- जीवात्मा वृत्तिनिरोधात् संसारादसम्बद्धो भवन् गुणातीतः केवलो विशुद्धः सन् मुक्तो भवतीति।

द्वितीयेऽन्वये—अर्थाद् यदा स्वरूपेऽन्वयस्तदा द्रष्टुः (जीवात्मनः) स्वरूपेऽवस्थानम्, भवतीति सम्बन्धः। अस्यैषोऽभिप्रायः—यत् तदानीं जीवात्मनः स्वरूपे, अर्थात् सर्वसाक्षि-सर्वान्तर्यामिपरमात्मनः स्वरूपेऽवस्थितिर्भवतीति। यतो हि—"ततः परिष्वजायसी देवता सा मम प्रिया" (अथर्व० १०।८।२५) इति मन्त्रात् प्रतीयते यज्जीवात्मा 'आलम्बनधर्मा', अर्थाद् आश्रयेच्छुकः, अधिष्ठानेच्छुक इति यावत्। अतस्तेन कश्चिदाश्रयो नूनमन्वेषणीयः, यदा च वृत्तिनिरोधस्तदा चित्तसम्बन्धविच्छेदः, चित्तसम्बन्धविच्छेदे सति च प्रकृतिविच्छेदः, प्रकृतिविच्छेदे च नास्ति तस्य सांसारिक आधारः, अर्थात् संसारे कश्चिदाधारः, अत आलम्बनधर्मत्वात् तेनाऽन्यः कश्चिदाश्रयः समाश्रयणीयः। तदानीं तत्र कोऽन्यो भवितुमर्हति परमात्मतो व्यतिरिक्तः। अतस्तदानीं परमात्मनः स्वरूपेऽवस्थानम्, अथवा सङ्गतिः सम्बन्धो वा भवतीति नितरां समञ्जसम्।

एनमेवाभिप्रायमुद्दिश्य लघुमञ्जूषायां बौद्धार्थस्य वाच्यत्वनिरूपणावसरे नागेशेनालेखि— "चित्तस्य द्रव्यरूपो वृत्त्याख्यः परिणाम इन्द्रियप्रणाल्या निर्गत्य विषयेण संयुज्य सूक्ष्मावस्थारूप-विषयवासनावशात् तत्तद्विषयाकारेण परिणमते। न तु तस्यां संयुक्तबाह्यविषयप्रतिबिम्बः, स्वप्नादौ बाह्यविषयासंयोगेन तत्प्रतिबिम्बासम्भवात्" इति। वेदान्तपरिभाषायामपि प्रत्यक्षखण्डे लिखितम्—"यथा तटाकोदकं छिद्रान्निर्गत्य कुल्यात्मना केदारान् प्रविश्य तद्वदेव चतुष्कोणाद्याकारं भवति, तथा तैजसमन्तःकरणमपि चक्षुरादिद्वारा घटादिविषयदेशं गत्वा घटादिविषयाद्याकारेण परिणमते। स एव परिणामो वृत्तिरित्युच्यते" इति।

## चित्तवृत्तिनिरोधस्य स्वरूपफलविचारः

"प्रत्यक्षानुमानागमाः प्रमाणानि" ( यो० द० १ पा० ७ सू० ) इति पातञ्जलसूत्रभाष्ये चेत्थं व्यासेनाप्यभाणि—"इन्द्रियप्रणालिकया चित्तस्य बाह्यवस्तूपरागात् तद्विषया सामान्यविशेषात्मनोऽर्थस्य विशेषावधारणप्रधाना वृत्तिः प्रत्यक्षं प्रमाणम्" इति ।

एवं चेदं निर्विवादं दार्शनिकसिद्धान्तसिद्धं यच्चित्तमिन्द्रियप्रणालिकया बहिर्निर्गत्य विषयाकारेण परिणमते । यदा चेन्द्रियप्रणालिकया न निर्गच्छति चित्तम्, तदा च न परिणमते विषयाकारेणेति । तादृश्यवस्था 'चित्तवृत्तिनिरोध'शब्देन गीयते योगिभिः प्रकृष्टप्राज्ञाचार्यामन्दचातुर्यधुरीणैर्जनैः । इदमेव चित्तवृत्तिनिरोधस्य स्वरूपमुट्टङ्क्यते ह्यनेकातीतयुगायातोभययोगियोग्यतामर्मज्ञलौकिकवैदिकप्राकृतपुरुषप्रवीणैः । इत्थञ्च चित्तवृत्तिनिरोधस्य स्वरूपं सम्प्रति सामान्यत्वेन व्यचारि । विस्तरभयात् सम्प्रति विरम्य विशेषतश्चाग्रिमे लेखे क्रमशः संदर्शयिष्यत इति निवेदयति देवो विविधविद्याविद्योतितान्तःकरणविद्वद्वृन्दवन्दितचरणारविन्दानां तत्रभवतां पण्डितप्रवराणां परिचर्यायामिति ।

### फलविचारः

इदानीं चित्तवृत्तिनिरोधस्य सामान्यतः फलविचारश्चर्च्यते । तत्र चित्तवृत्तिनिरोधे भवत्येव महीयान् लाभ इति को न जानाति सचेतस्कः शेमुषीमान् विद्यासरस्वतीसमुपास्यमानो मनुजतनुधारी मानुषो महान् । इदं तावन्न वयं स्वपक्षत एव समालपामः, अपि त्वाधिदैविकाधिभौतिकाध्यात्मिकलौकिकत्रिविधतापावलिप्तप्राणिनिकायशाश्वतसुखनिवहसंप्रदानाभिकाङ्क्षया स्वयमेव पतञ्जलिर्भगवान् पूर्वोक्तनिरोधफलप्रदर्शनार्थं निर्ममे 'विभूतिपाद'नामकं विशिष्टं तृतीयं पादम् । यमविद्यासाम्राज्याद् देशदौर्भाग्याद् वा केचिदेव विदन्ति भारतीयाः, न सर्वेऽपीति महत् कष्टम् ।

ममेदमत्र चिराद् मनोगतं सम्प्रति प्रसङ्गवशादोष्ठमागतं वृत्तं पुरस्करोमि पुरस्तात् तत्रभवतां श्रीमतां यद् योऽयमस्माकं भारतो देशः पुरा परेषां समेषां देशानां मूर्धन्यो जगद्गुरुश्च समासीत्, यद्विषये भगवान् मनुरपीत्थं व्याबभाषे—

एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।
स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः ॥ इति ।

एतावदेव न, अपि तु यत्रत्यजनाः समस्मिन्नपि जगतीतले समन्ताद् देवशब्देन समलङ्कृताः समासन्, यत्र च अग्नि-वाय्वादित्याङ्गिरो-व्यास-जैमिनि-गौतम-कपिल-कणाद-पतञ्जलि-शङ्कर-

दयानन्दप्रभृतयो महर्षयो योगिन आचार्यश्च स्वकीयाद्भुतलेखनकृतिचमत्कृतग्रन्थराशिपयोधि-समुद्गताऽमृतनिर्झरसीकरसंवलितशीतलमन्दसुगन्धानिलसंस्पर्शसमस्तसंसारप्राणिनिकायसमुज्जीवनस-मुत्थितशुभ्रयशोधवलीकृताशाचक्रवालाः समधिवासमधिचक्रुः, अपि च यत्र शिबि-कर्ण-दधीचि-हरिश्चन्द्रादिसदृशा दानिनः, द्रोण-भीष्म-भीमार्जुन-युधिष्ठिरादिसदृशा मानिनो योद्धारश्चासन्। किञ्च, यत्र सती-सीता-सावित्री-गान्धारी-सुलोचनादिसदृश्यः परमपुनीतपातिव्रत्यधर्मपरायणाः परम-प्रसिद्धाः कुलीना अङ्गनाश्चासन्, किमधिकं वदामः, यत्र च पतितपावनजह्नुकन्यापयः-पावनीकृतप्रदेशे देशे भारते वर्षे सकलभूतभावनसमुत्कृष्टमर्यादापुरुषोत्तमपदवीकः कौशल्यानन्द-वर्द्धनो भगवान् रामः, अपि च यत्रोद्दण्डप्रचण्डदुर्दण्डकंसादिदानवनिपीडितमनुजवृन्ददुःख-निक्रन्दनयशोदानन्दनन्दनव्रजनन्दनश्रीकृष्णचन्द्रोऽपि भगवान् स्वशरीरं तत्रत्यरजसा धूलि-धूषितं चकार, हा हन्त सोऽयं प्रदेशोऽद्य परैर्वैदेशिकैर्बर्बरैश्चीनहतकैः पददलितः क्रियते, यश्च हिमालयः कविकुलगुरुणा कालिदासेन कदाचित् कुमारसम्भवाभिधानकाव्ये दैशिकप्रेमोल्लसित-मानसिकोल्लासविलासप्रदर्शकवक्ष्यमाणपद्येन "अस्त्युत्तरस्यां दिशि देवतात्मा हिमालयो नाम नगाधिराजः" इत्यनेनेत्थं देवतात्वेन गीयते स्म, स एवाद्य भारतीयजनाराधनीभूतभूतभावनभूतपति-शिवालयरूपकैलाशाधारो हिमपतिः पापीयोभिर्मनुजहतकैर्निरवसितशूद्रतां गतैश्चीनदेशवास्तव्यैः स्वाधीनः क्रियत इत्येव न, अपि तु स्वकीयः ( अर्वाच्चीनदेशीयः ) अभारतीयश्चाभिलष्यते।

किमिति कारणम्, यदेतादृशं क्लेशावहं ह्यकथनीयं सोढुमशक्यं परिवर्तनम्। किं न सा पूर्वा प्रकृतिः, किं न तान्येव पञ्चभूतानि, किं न वयं त एव ऋषिवंशजाः सन्ततयः, किं न सा भारतभूमिः, किं न स एवेश्वरः, सैव प्रकृतिः, तान्येव पञ्चभूतानि, त एव वयमृषिवंशजाः, सैव भारतभूमिः, स एव "पूर्वेषामपि गुरुः कालेनानवच्छेदात्" ( यो० द० प्र० पा० २६ ) इत्यादिसूत्रजालसमुद्गीर्णो जगदीश्वरः।

भगवन्तो भारतभूतिभाजो भारतीयाः! सर्वं तदेव, परमस्ति चेत् कश्चिद् दोषस्तर्ह्ययं एव यदस्माभिर्भारतीयैर्विशेषतो वेददर्शनादिरूपस्वग्रन्थरत्नपर्यालोचनं सर्वथापि परित्यक्तम्, किमधिकमालपामः, सृष्टिस्थितिसंहारकारकान्तर्ज्योतिःस्वयंज्योतिर्विबोधकनिखिलमानवजीवनैक-लक्ष्यभूतमोक्षपदप्रदायकसर्वविद्याप्रधानभूतज्ञानाधायकदर्शनशास्त्रं तु सर्वथा परित्यक्तमिव प्रतिभाति। अत एव नेत्रमन्तरा यथा पुरुषोऽन्धः सन् न किमपि पश्यतीत्येतावदेव न, अपि तु नैत्यिकक्रियायामपि सर्वथा पराश्रितो भवति, तथैवाद्य सकलोऽपि लोको विशेषतश्च भारतीयो

जनो दर्शनशास्त्रज्ञानरूपनेत्रमन्तरा, अर्थाद् दर्शनशास्त्रपराङ्मुखत्वाद् मोक्षपथे तु का कथा, साधारणवस्तुविज्ञाने देशरक्षादिकार्येऽपि च सततं परमुखापेक्षी वैदेशिकजनवृन्दकृपाकाङ्क्षी सर्वथापि पराश्रितश्च दरीदृश्यते, चञ्चूर्यते च नितरां चारवृत्तिम्।

अपि च, किं न जानन्ति श्रद्धास्पदाः सद्भावनाभूतिभाविताश्च भवन्तः, यदद्यत्वे यः कश्चिदपि वक्ता राजकीयोऽराजकीयो वा, शासकोऽशासको वा, भारतीयोऽभारतीयो वा, आङ्ग्लभाषाज्ञोऽनाङ्ग्लभाषाज्ञो वा, अपरोऽपि वा यः कश्चिद् व्याख्यानं दातुमारभते, स उच्चैः स्वरेण समेजारव्यफलकोपरिहस्ताघातम्, सोरस्ताडम्, सग्रीवाभङ्गं बहुशो वक्तुमारभते, संस्कृताध्येतारश्छात्राः, संस्कृताध्यापकाश्च गुरवस्तदैव लोकप्रतिष्ठाम्, अन्यभाषाध्येत्रन्यभाषाध्यापकसमताञ्च प्राप्स्यन्ति, यदा च ते ह्याधुनिकभाषास्तत्रत्यविज्ञानञ्च संस्कृतेन सह पठेयुः, अध्यापयेयुश्चेति। स च दुर्दैवहतको दार्शनिकज्ञानपराङ्मुखो व्याख्याता सर्वथेदमेव जानाति यद् यत् किमपि विज्ञानं सौष्ठवञ्च जगतीतले चास्ति तत् सर्वं संस्कृतेतरभाषास्वेव, विशेषतश्चाङ्ग्लभाषायामेवास्ते, न तु संस्कृतभाषायाम्। तादृशमुद्धतमुत्कटमनर्गलं वक्तारं प्रति सुहृद्भूत्वाऽहमाचक्षे यदुपास्व गुरून्, पठ दर्शनशास्त्रम्, अनुशीलय विशेषतश्च योगदर्शनम्, भविष्यति च तदानीं ज्ञानम्, विकसिष्यति च ज्ञानचक्षुः, स्फारीभविष्यति च चर्मचक्षुः। यद् यादृशं विज्ञानं सौष्ठवञ्च संस्कृतभाषायां विशेषतश्च दर्शनशास्त्रेषु वरीवर्ति, किं तादृशमस्ति क्वचिदन्यत्रापि भाषासु संस्तावस्याम्। उदाहरणत्वेन निबन्धकायविस्तरभयान्नाहं सम्प्रति वेदं ब्राह्मणं श्रौतसूत्रं गृह्यसूत्रमुपनिषदं वा समुपस्थापये, अपि तु लाघवानुरोधेन विभूतिपादनामधेयस्य योगदर्शनतृतीयपादस्य सूक्ष्माणि कतिपयसूत्राण्येव प्रदर्शयामि। तत एव स्थालीपुलाकन्यायेन संगंस्यन्ते वैदेशिकशिक्षादीक्षादीक्षिता बहिर्भारतीयाभ्यन्तरवैदेशिकप्रभावप्रभाविताः शासका अशासका वा देहिनो दर्शनानां विज्ञानं संस्कृतशिक्षायाश्च गौरवम्।

उपरिनिर्दिष्टपादस्येदमस्ति सूत्रमेकम्—"परिणामत्रयसंयमादतीतानागतज्ञानम्" (यो० द० तृ० पा० १६ सू०) इति। अर्थाद् यदा धारणा-ध्यान-समाधय एकत्र भवन्ति, तदा संयम इति संज्ञा भवति। तदेवाभाणीत्थं तत्रैव व्यासभाष्ये तत्रभवता भगवता व्यासेन यत्—"धारणाध्यानसमाधित्रयमेकत्र संयम उक्त इति। तथा च धर्मलक्षणावस्थापरिणामेषु संयमाद् योगिनां भवत्यतीतानागतज्ञानम्" इति। अर्थात् परिणामत्रयं साक्षात्क्रियमाणमतीतानागतज्ञानं तेषु संपादयति। अर्थात् परिणामत्रये संयमकरणाद् योगी भूतं भविष्यच्च सर्वं वस्तुजातं सुखेनासीनो विजानाति।

अपि चापरं सूत्रमपि किञ्चिन्निभालयतेदं यत्—"शब्दार्थप्रत्ययानामितरेतराध्यासात् संकरः, तत्प्रविभागसंयमात् सर्वभूतरुतज्ञानम्" ( यो० द० तृ० पा० १७ सू० ) इति। तत्रैवास्य सूत्रस्य व्यासेनेत्थं भाष्यमभाषि यत्—"तस्य संकेतबुद्धितः प्रविभाग एतावतामेवं-जातीयकोऽनुसंहार एकस्यार्थस्य वाचक इति, संकेतस्तु पदपदार्थयोरितरेतराध्यासरूपः स्मृत्या-त्मको योऽयं शब्दः सोऽयमर्थः, योऽयमर्थः सोऽयं शब्द इति। एवमितरेतराध्यासरूपः संकेतो भवतीति। एवमेते शब्दार्थप्रत्यया इतरेतराध्यासात् संकीर्णाः, गौरिति शब्दः, गौरित्यर्थः, गौरिति ज्ञानम्। य एषां प्रविभागज्ञः स सर्ववित्। इष्टञ्च वाक्यार्थे पदरचनम्—श्रोत्रियश्छन्दोऽधीते, जीवति प्राणान् धारयति। तत्र वाक्ये पदार्थाभिव्यक्तिः, ततः पदं प्रविभज्य व्याकरणीयं क्रियावा-चकं कारकवाचकं वा, अन्यथा भवत्यश्वः, अजापय इत्येवमादिषु नामाख्यातसारूप्यादनिर्ज्ञातं कथं क्रियायां कारके वा व्याक्रियेतेति, तेषां शब्दार्थप्रत्ययानां प्रविभागः, तद् यथा श्वेतते प्रासाद इति क्रियार्थः, श्वेतः प्रासाद इति कारकार्थः शब्दः, क्रियाकारकात्मा तदर्थः प्रत्ययश्च। कस्मात्? सोऽयमित्यभिसम्बन्धात्। एकाकार एव प्रत्ययः सङ्केत इति, यस्तु श्वेतोऽर्थः, स शब्दप्रत्यययो-रालम्बनीभूतः। स हि स्वाभिरवस्थाभिर्विक्रियमाणो न शब्दसङ्गतो न बुद्धिसङ्गतः, एवं शब्द एवं प्रत्ययो नेतरेतरसहगतः, इत्यन्यथा शब्दः, अन्यथा अर्थः, अन्यथा प्रत्यय इति विभागः, एवं तत्प्रविभागसंयमाद् योगिनः सर्वभूतरुतज्ञानं संपद्यत इति" इति।

उपर्युट्टङ्कितसूत्रभाष्ययोरयमाशयो यच्छब्दार्थप्रत्ययानां प्रायेण लोकप्रसिद्धं पारस्परिक-मितरेतराध्यासमवधीर्य यो योगी शब्दः पृथक्, अर्थः पृथक्, प्रत्ययः पृथगित्येवं विचारशील-विशिष्टविद्वदनुभवानुरूपं प्रत्येति, प्रतिक्षणं सततमनुभवति च त्रयाणामपि शब्दार्थप्रत्ययानां पृथक् पृथक् स्वरूपम्, स नूनं सर्वभूतरुतज्ञानम् अर्थात् निखिलप्राणिशब्दविज्ञानमधिगच्छति। तात्पर्यमेतद् यत् स समेषां स्वेदजानाम्, उद्भिज्जानाम्, अण्डजानाम्, जरायुजानाञ्च प्राणिनां सूक्ष्मातिसूक्ष्मं महतोऽतिमहान्तञ्च शब्दमाकर्णयितुं प्रभवति। अपि चान्यत् किं वदामः, तेषां पशु पक्षि-मृग-कीट-पतङ्ग-सरीसृपादीनां पारस्परिकसंलापरहस्यमपि तत्क्षणं चानुवेत्ति।

सम्प्रति सम्यक्समुदीरितमुपरिनिर्दिष्टमुदन्तजातमनुनिशम्य, अवगम्य चैतदीयसारतत्त्वम्, किञ्चित् सुनिश्चलेन चेतसा स्वोरःस्थले पाणिं निधाय क्षणमनुचिन्तयन्तु पृच्छन्तु च संस्कृते-तरभाषानुशीलनोन्मत्तमानसान् गीर्वाणवाणीविलाससुस्वादुस्वारसिकरसामृतपानसुखपराङ्मुखान्। किञ्च,ये च कथयन्ति यत् संस्कृतेतरभाषासु विशेषतश्चाङ्गलभाषायामेव निहितं विज्ञानं सर्व-

महत्। तदेव च चतुर्दिक्षु चतुराणां चारित्र्यचर्चितानां चेतसि चमत्कारमाविष्करोति मनुजानाम्। तदनुशीलनपरिशीलनशालिन एव संस्कृताध्यापकाः संस्कृताध्येतारश्च आङ्गलभाषाद्यध्यापकाध्येतृसदृशं पदं मानञ्च समधिगमिष्यन्तीतीत्येवं वादिनो भारतीयताविरहितान् भारतभूमिसंस्थितान् मानवान् प्रति।

किञ्चिद् हृदयं सुस्थिरं विधाय, सहृदयवृत्तिमास्थाय च, भूतभावनं भवेशं साक्षीकृत्य हार्दिकीं भावनां वाऽभिलक्ष्य किञ्चित् सत्यं सत्यं समुद्गिरन्तु, किमस्ति कस्याञ्चिदपि संस्कृतेतरभाषायां तादृशं विज्ञानम्, अथवाऽस्ति कश्चिद् निखिलेऽपि जगतीतले संस्कृतेतरभाषाणामध्येता वैज्ञानिको वा, योऽतिधनराशिव्ययमकृत्वैवानायासेन यत्र कुत्रापि सुखासीनोऽतीतानागतज्ञानं विदध्यात्, अपि वा समस्तानां त्रिलोकसंस्थितानामेवं चतुर्दशभुवनगतानां प्राणिनां स्वेदजानामण्डजानामुद्भिज्जानां जरायुजानां चोच्चैर्नीचैः सर्वप्रकारकं शब्दजातं शृणुयात्। किं वा लिखितमस्ति कस्मिंश्चिदपि संस्कृतेतरभाषापुस्तके क्वापीदृशं विज्ञानम्? नो चेत्, तर्हि किमर्थं निन्दन्ति संस्कृतभाषां संस्कृतज्ञान् संस्कृतभाषाया अध्यापकान् छात्रांश्च। किम्? "निन्दति कञ्चुकमेव शुष्कस्तनी नारी" इति संस्कृताभाणकं यद् वा तथैव "नाच न जाने आंगन टेढ़ो" इत्यादि लौकिकमाभाणकञ्च चरितार्थयन्ति भवन्तः। किं सचीत्कारं भाषणाडम्बरघटाटोपेन लौकिकान् गीर्वाणवाणीविलासरहितान् सरलस्वभावकान् जनान् स्वकीयान् भ्रातॄन् वञ्चयन्तः, स्वयं स्वकीयमात्मानमपि हठात् तर्जयन्तो नाधुनापि ह्रियमधिगच्छन्ति श्रीमन्तः, नाधुनापि मूकीभूयोपांशुभावमनुधारयन्ति।

किं वैदेशिकविज्ञानोत्पादित'राकेटा'ख्यविमानयन्त्रस्थितो वानरः पुरुषो वा कश्चिच्चन्द्रमसादिलोकं याति यास्यति यातो वा, एतावतैव गर्विता भवन्तः। यदि सत्यमेव गर्वः, तर्हि नूनं "काकिणीं प्राप्य धनवान् संपन्नः" अथवा "सुपूरो मूषिकाञ्जलिः" इति द्वे हास्यास्पदे लौकिकोक्ती अनुजीवयन्ति भवन्तः। यतो हि भवतां यदिदं विज्ञानं वर्वर्ति यस्य कारणाद्धयनेके प्राणिनो विशीर्णाः, कोटिशो वा मुद्रा विनष्टाः, कीदृशं महत् कष्टञ्च सोढम्? तत् किं विज्ञानम्? अन्यविज्ञानानां तु का कथा, भारतीयस्य केवलस्य यौगिकविज्ञानस्यापि किं षोडशीमपि कलां साम्येन स्वात्मनि समाधातुमर्हति, अपि चाङ्ग! किञ्चित् सूक्ष्मेक्षिकयेदमपि विवेचयन्तु, यत् तत् साम्प्रतिकं वैदेशिकं विज्ञानम्, तत् किं संसारस्य सुखाय विनाशाय वा? नाद्यः, यतो हि बहुविचारणान्ते निश्चितमिदमेवायाति यच्छ्रीमतामिदं विज्ञानं विज्ञानोत्पादितयन्त्रं वा लोकानां

देशानाञ्च केवलं विनाशायैव। तर्हि कोऽसावुदर्कोऽनेन विज्ञानेन परं संस्कृतभाषाग्रन्थोदीरितं सकलसूरिसमर्चितपादारविन्दभगवत्पतञ्जलिप्रणीतदर्शनराजयोगदर्शनविज्ञापितविज्ञानन्तु संसारप्राणिनिकायस्य महते भूरि भूरि सुखायैवेत्यपि विचारवैशद्येन निभालयन्तु तत्रभवन्तः श्रीमन्तः।

अन्तेऽधुना पद्यचतुष्टयेन स्वीकायमन्तर्निहितसमुद्गारमुद्गिरामि—

मान्याः ! निबन्धश्च निबन्धकर्तु-
र्नूनं स्वभावोज्ज्वलपूर्णराशिः।
ज्ञानं स्वरूपस्य तु लेखकस्य
ह्यनेन सभ्याः ! भवतीति पूर्णम् ॥

शिक्षा च दीक्षा कुलतो गृहीता
तस्माद् विचारा मयि भारतीयाः।
नीतिश्च रीतिः खलु संस्कृतिर्मे
वेदप्रसूतेति विभावयन्तु ॥

नातः सहे संस्कृतिनिन्दनञ्च
नातः सहे संस्कृतनिन्दनञ्च।
स्वाभाविका ये ह्युदिताः सुभावा-
स्त एव विद्वत्पुरतो विकीर्णाः ॥

अतोऽधिकं वाच्यमितोऽग्रिमेऽहं
वक्ष्यामि विस्तारयुते निबन्धे।
विज्ञा मदीयस्खलनं व्युपेक्ष्य
देवो दयार्हः स्वनुकम्पनीयः ॥ इति।



# साहित्यदृष्ट्यात्मतत्त्वविचारः

श्रीमहादेव उपाध्यायः, वा० सं० वि० वि० साहित्याध्यापकः।

रसरूपतया शास्त्रे रूपितो यः परः पुमान्।
साहित्यदृष्ट्या तत्प्राप्तिक्रमः सन्दर्श्यते मया ॥

इह जगति चतुर्विधपुरुषार्थेषु मोक्ष एव परमः पुरुषार्थ इति सर्वेषां तीर्थकृतां सम्मतम्। तस्य परमत्वं च नित्यत्वात्, नित्यत्वं च "न स पुनरावर्तते" इति श्रुतेः। मोक्षश्चात्यन्तिको दुःखोपरमः परमानन्दप्राप्तिश्च। कर्तृत्वभोक्तृत्वादिरूपः संसार एव बन्धः। स चाज्ञानमूलकः। तन्निवृत्तिश्च सम्यग्ज्ञानादित्यपि सर्वेषां परीक्षकाणामविसंवादम्। तथा च श्रुतिरपि—"आत्म वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः" इति। एवं च सम्यग्ज्ञानस्य मोक्षसाधनत्वे न विवादः, सम्यज्ञानस्वरूप एव परं विवादः। तथा हि—सत्त्वपुरुषान्यताख्यातिरेव सम्यग्दर्शनमिति सांख्या योगाश्च। तत्त्वंपदार्थयोरभेददर्शनं तदिति ब्रह्माद्वैतवादिनः। षोडशपदार्थीतत्त्वज्ञानम्, सप्तपदार्थीतत्त्वज्ञानं वा तदिति गौतमीयाः काणभुजाश्च। एवमन्येऽपि तत्स्वरूपे विप्रतिपन्ना युक्तितदाभाससमाश्रयाः सन्तः।

वयं तु मन्यामहे विषयान्तरानालिङ्गितपरमानन्दनिर्भरस्वमात्रविश्रान्तसंवित्सतत्त्वस्वात्मरूपरसस्वरूपसाक्षात्कारान्नापरं सम्यग्ज्ञानमस्तीति। यतो रस एव हि परं ब्रह्म। "रसो वै सः", "रसं ह्येवायं लब्ध्वानन्दीभवति" इत्यादिश्रुतयो रसस्वरूपमेव ब्रह्म समामनन्ति। रसस्वरूपं ब्रह्मैव च जीवात्मनोऽपि वस्तुभूतं तत्त्वम्, "तत्त्वमसि", "अहं ब्रह्मास्मि", "अयमात्मा ब्रह्म सर्वानुभूः" इत्यादिश्रुतिष्वभेदश्रवणात्।

रस एव काव्यस्यापि जीवितम्, "वाग्वैदग्ध्यप्रधानेऽपि रस एवात्र जीवितम्" इत्याग्नेयपुराणोक्तेः। तथा च काव्यार्थमर्मज्ञगुरूपदिष्टवर्त्मना परमेण समाधिना योगिवत्काव्यजीवितं रसं व्यञ्जनया रसनयास्वादयन्तस्तत्काले निवृत्तान्यव्यापारा निर्विकल्पं निर्विषयं मनोलयमासादयन्त आदरनैरन्तर्यसत्कारसेवितेन रससाक्षात्काराभ्यासेन आरब्धकर्मफलभोगावसाने मुच्यन्त इत्यालङ्कारिकाणां समयः। तदुक्तम्—"पुण्यवन्तः प्रमिण्वन्ति योगिवद्रससंततिम्" इति। अत्र 'योगिवद्' इत्युक्त्या रससाक्षात्कारस्यात्मसाक्षात्कारतुल्यता दर्शिता। एवमन्यत्रापि—

सत्त्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः ।
वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः ॥
लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः ।
स्वाकारवदभिन्नत्वेनायमास्वाद्यते रसः ॥ इत्युक्तम् ।

अत्र च रसस्य परब्रह्मस्वरूपत्वं जीवाभेदश्च उक्तः ।

किञ्च, निष्कामेन भगवन्नारायणचरणारविन्दस्तवादिरूपेण काव्यनिर्माणे भगवति अहैतुकी भक्तिः, भक्त्या च भगवत्कृपा, तया च स्वात्मविज्ञानम्, तेन मोक्ष इत्येवमपि कवीनां मोक्षपथो भवति । किञ्च, मनस इन्द्रियाणाञ्च बाह्यवस्तुविषयकत्वमात्मतत्त्वविमुखत्वञ्च स्वाभाविकम् । तदुक्तमुपनिषत्सु—"पराञ्चि खानि व्यतृणत् स्वयम्भूस्तस्मात्पराङ् पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन् ॥" इति । तेषां निरोधेनात्माभिमुखीकरणञ्च परमपुरुषार्थसाधनम् । स च मनस इन्द्रियाणां च निरोधो बलात्क्रियमाणो दुःखाकरोत्युद्वेजयन् ।

इत्यतः काव्यरसास्वादलुब्धमनसः सुखाकरो निरोध इत्यादि परमं प्रयोजनं काव्यस्य । एतदेवाभिप्रेत्योक्तमभियुक्तैः—"काव्यशास्त्रविनोदेन कालो गच्छति धीमताम् । व्यसनेन च मूर्खाणां निद्रया कलहेन वा ॥" इति । किञ्च, "काव्यालापांश्च ये केचिद् गीतकान्यखिलानि च । शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मनः॥" इति काव्यस्य विष्णुरूपत्वमुक्तम् । अतोऽभ्यासेन क्रियमाणमुच्चार्यमाणमनुसन्धीयमानं रसभावनया भाव्यमानं च काव्यं विष्णोः सविशेषरूपान्तरस्मरणमिव सद्योऽनन्तदुरितदाहाय प्रभवतीत्यत्र न कस्यापि सचेतसो विमतिः ।

किञ्च, वाक्यव्युत्पत्त्याधायकत्वाच्च काव्यस्य वेदान्तवाक्यजन्यब्रह्मात्मैक्यावबोधे उपकारकत्वादपि परमपुरुषार्थसाधनत्वम् । किञ्च, काव्यस्य गीतिरूपस्य परमपुरुषार्थसाधनत्वं परमपुरुषार्थसाधनीभूतसंगीतोपकारकत्वेनापि सम्भवति । अत एव नारदादयः प्राञ्चः, अर्वाञ्चोऽपि सूरदासादयः काव्यं निर्माय भगवद्यशांसि गायन्तः स्मर्यन्ते ।

संगीतस्य च परमपुरुषार्थसाधनत्वं याज्ञवल्क्यस्मृतौ प्रायश्चित्ताध्यायान्ते ग्रन्थान्ते उक्तम् । किञ्च, काव्यश्रवण-नाट्यदर्शनाभ्यां परमानन्दमाविर्भावयद्भ्यां सुखावबोधो मोक्षसाधनपद्धतिः । तत्र काव्यं यथा—वैराग्यशतक-योगवाशिष्ठादिकम् । नाट्यं च प्रबोधचन्दोदय-भर्तृहरिनिर्वेदादिकम् । किञ्च, काव्यत एवास्वाद्यते शमस्थायिभावः शान्तो रसः । तल्लक्षणं च—"शमो निरीहावस्थायामात्मविश्रामजः सुखम्" इत्यग्रिमो मोक्षसाधनं सः ।

## साहित्यदृष्ट्यात्मतत्त्वविचारः

भागवतास्तु भक्तिरेव परमः पुरुषार्थः, सर्वदुःखोपशमसाधनत्वात्, सर्वदुःखोपशमरूपत्वाच्च। तत्राद्या साधनभक्तिपदेनाभिधीयते, द्वितीया तु साध्यभक्तिरूपेण। साध्यभक्तेः परमपुरुषार्थत्वं तूक्तं भक्तिरसायने आरम्भ एव—

नवरसमिलितं वा केवलं वा पुमर्थं
परममिह मुकुन्दे भक्तियोगं वदन्ति।
निरुपमसुखसंविद्रूपमस्पृष्टदुःखं
तदहमखिलतुष्ट्यै शास्त्रदृष्ट्या व्यनज्मि॥ इति।

तत्र साध्यभक्तेर्लक्षणन्तु "द्रुतस्य भगवद्धर्माद्धारावाहिकतां गता। सर्वेशे मनसो वृत्तिर्भक्तिरित्यभिधीयते॥" इति, "द्रुते चित्ते प्रविष्टा या गोविन्दाकारता स्थिरा। सा भक्तिरित्यभिहिता विशेषस्त्वधुनोच्यते॥" इति च। तत्र साध्यभक्तौ भक्तिशब्दस्य प्रयोगो भजनं भक्तिरिति भावव्युत्पत्त्या। साधनभक्तिस्तु श्रवणादिरूपा भज्यते सेव्यतेऽनया हरिरिति करणव्युत्पत्त्या। अत्र बाहुलकात् करणे क्तिन्। तदुक्तं भागवते—

श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्।
अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्॥ इति,
पुंसार्पिता भक्तिर्विष्णौ चेन्नवलक्षणा।
क्रियते भगवत्यद्धा तन्मन्येऽधीतमुत्तमम्॥ इति च।

तत्र साध्यभक्तिरूपो रसो द्विविधः—रसान्तरमिश्रितः, शुद्धश्च। तस्य रसान्तरमिश्रितत्वं शुद्धत्वं चोपपादयिष्यते। रसान्तरमिश्रितस्य भक्तिरसस्याभिव्यक्तिस्तु रसान्तराभिव्यञ्जकशुद्धभक्तिरसाभिव्यञ्जकैरेव भवति। तत्र शुद्धसाध्यभक्तिरूपस्य रसस्याभिव्यक्तिक्रमस्त्वेवम्—

चिरं श्रवणादिरूपभगवद्धर्माभ्यासेन जनितः सात्वतां भक्तानां हृदि संस्कारात्मना स्थितो भगवद्विषयको रत्याख्यः स्थायिभावः काव्यश्रवणाद् अभिनयदर्शनाद्वा समुपस्थापितेन भगवता आलम्बनविभावेन, तुलसीचन्दनादिना तु श्रुतेन दृष्टेनोद्दीपनविभावेन, नेत्रादिविक्रियारूपैरानन्दाश्रुपातादिभी रोमाञ्चादिभिश्चानुभावैर्निर्वेदादिभिश्च संचारिभावैरभिव्यज्यते परमानन्दसाक्षात्कारात्मकः। एष च परमपुमर्थरूपः साध्यभक्तिरूपरसास्वादः काव्यनाट्याभ्यां सुकर इत्येवं मोक्षेऽप्युपयोगः काव्यनाट्ययोः। तदुक्तमग्निपुराणे—

धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च ।
करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥

एष च साध्यभक्तिरूपो रसो द्वैविध्येन प्रदर्शितो भक्तिरसायने आद्यश्लोके—"नवरसमिलितः केवलश्च" इति । तत्र नवरसमिलितो भक्तिरसो वर्णितो भक्तिरसायने द्वितीयोल्लासे—"शृङ्गारः करुणो हास्यस्तथा प्रीतिर्भयानकः । अद्भुतो युद्धवीरश्च दानवीरश्च मिश्रिताः ॥" इति । अत्र यद्यपि सप्तानामेव मिश्रितरसरूपत्वमुक्तम्, तथापि तत्रैव— "कामजे द्वे रती" इत्यत्र रतिद्वयस्य स्थायित्वेन प्रकीर्तनाद् वीररसद्वैविध्यवत् शृङ्गाररसद्वैविध्यमत्राभिप्रेतम्। न चैवमपि न नवरसत्वसम्पत्तिरिति वाच्यम्, सम्भावनया आपाततो नवरसत्वोक्तेः । अत एवाग्रे "शृङ्गारः करुणो हास्यः" इत्यादिना रसाष्टकमिश्रितत्वमेव भक्तिरसस्य मूले प्रदर्शितम् ।

शुद्धो भक्तिरसस्तु भगवद्रतेः रसान्तरविभावादिराहित्ये सम्भवति । न च भगवद्विषया रतिर्भाव एव, न तु सा कदाचिद्रसरूपतां प्रतिपद्यते, स्वीकृतं चैतत् प्रायेण सर्वैरालङ्कारिकैरिति वाच्यम्, तस्य सिद्धान्तस्य देवान्तररतिविषयकत्वात् । परमानन्दरूपे परमात्मनि रतिस्तु रसरूपतां प्राप्नोत्येवेति । दर्शितश्च तस्य रसरूपतयाऽभिव्यञ्जको विभावादिः प्राक् । एतत्सर्वमुक्तं भक्तिरसायने द्वितीयोल्लासे—

रसान्तरविभावादिसङ्कीर्णा भगवद्रतिः ।
चित्ररूपवदन्यादृग्रसतां प्रतिपद्यते ॥
रसान्तर्विभावादिराहित्ये तु स्वरूपभाक् ।
दशमीमेति रसतां सनकादेरिवाधिकाम् ॥
रतिर्देवादिविषया व्यभिचारी तथाञ्जितः ।
भावः प्रोक्तो रसो नेति यदुक्तं रसकोविदैः ॥
देवान्तरेषु जीवत्वात् परानन्दाप्रकाशनात् ।
तद्योज्यं परमानन्दरूपे न परमात्मनि ॥
क्रोधशोकभयादीनां साक्षात्सुखविरोधिनाम् ।
रसत्वमभ्युपगतं तथानुभवमात्रतः ॥
इहानुभवसिद्धोऽपि सहस्रगुणितो रसः ।
जडेनेव त्वया कस्माद् अकस्मादपलप्यते ॥ इति ।

तत्र सम्भोगशृङ्गारमिश्रितो भक्तिरसो यथा भागवते दशमस्कन्धे उत्तरार्धे गोपीनां रासप्रकरणे। विप्रलम्भोऽपि भगवति तिरोहिते गोपीनां तत्रैव। करुणरसमिश्रितत्वं भक्तिरसस्य तत्रैव पूतनयान्यत्र नीते कृष्णे यशोदानन्दयोः। हास्यरसमिश्रितो भक्तिरसो यथा भागवते दशमस्कन्धे पूर्वोर्द्धेऽष्टमाध्याये चतुर्विंशे श्लोके गोपीनां "वत्सैरितस्तत उभावनुकृष्यमाणौ प्रेक्षन्त्य उज्झितगृहाः जहृषुर्हसन्त्यः" इति। प्रीतिभयानकमिश्रितो भक्तिरसो यथा श्रीमद्भगवद्गीतायां विश्वरूपदर्शनानन्तरं "स्थाने हृषीकेश तव प्रकीर्त्या" इति प्रक्रम्य प्रवृत्तमर्जुनवचनम्। ब्रह्मस्तुतौ "पश्येश मेऽनार्यमनन्त आद्य" इत्यादिकम्, एकादशस्कन्धे त्रिंशाध्याये "जानता कृतमिदम्" इत्येतत्प्रभृतिकलुब्धकवाक्यञ्च। अद्भुतमिश्रितो भक्तिरसो यथा भागवते दशमस्कन्धे पूर्वार्द्धे नवमाध्याये सप्तदशश्लोकेः—

एवं स्वगेहदामानि यशोदा संदधत्यपि।
गोपीनां सुस्मयन्तीनां स्मयन्ती विस्मिताऽभवत्॥

यद्वा वामनं दृष्ट्वा बलेरुक्तिः—

चित्रं महानेष बतावतारः क्व कान्तिरेषाऽभिनवैव भङ्गिः।
लोकोत्तरं धैर्यमहो प्रभावः काप्याकृतिः नूतन एष सर्गः॥

युद्धवीरमिश्रितो भक्तिरसो यथा भागवते भीष्मवाक्ये—

रथतुरगरजोविधूम्रविष्वक्कचलुलितश्रमवार्यलङ्कृतास्ये।
मम निशितशरैर्विभिद्यमाने त्वचि विलसत्कवचैस्तु कृष्ण आत्मा॥

दानवीरमिश्रितो भक्तिरसो यथा बलेर्वामने।

शुद्धसात्त्विकभक्तिर्द्विधा—साधकनिष्ठा, सिद्धनिष्ठा च। तेन शुद्धभक्तिरसोऽपि द्वैविध्यं लभते। तत्र प्रथमा मिश्रितभक्तिवद् दृष्टादृष्टोभयफला। चरमा दृष्टमात्रफला सनकादिसिद्धनिष्ठा। आद्या त्वस्मदादिनिष्ठा। रजस्तमोभ्यां मिश्रितस्य तु भक्तिरसस्य न दृष्टं फलं चैद्यादेः, किन्त्वदृष्टमेव। शुद्धसात्त्विकभक्तिरसस्य तु नादृष्टं फलम्, किन्तु दृष्टमेवेत्यादिकमुक्तं भक्तिरसायने द्वितीयोल्लासे—

दृष्टादृष्टफला भक्तिः सुखव्यक्तेर्विधेरपि ।
निदाघदूनदेहस्य गङ्गास्नानक्रिया यथा ॥
रजस्तमोभिभूतस्य दृष्टांशः प्रतिबध्यते ।
शीतवातातुरस्येव नादृष्टांशस्तु हीयते ॥
तथैव जीवन्मुक्तानामदृष्टांशो न विद्यते ।
स्नात्वा भुक्तवतां भूयो गङ्गायां क्रीडतां यथा ॥
वर्तमानतनुप्राप्यं फलं दृष्टमुदाहृतम् ।
भाविदेहोपभोग्यं यत्तददृष्टमुदीरितम् ॥ इति ।
( २।४७-५० )

तदेवं परमानन्दात्मकब्रह्मात्मस्वरूपरससाक्षात्कारसिद्धिपूर्वकमपुनर्भवाय काव्यं नाट्यञ्च भगवद्भक्तिसम्पादकं भगवद्धर्मप्रतिपादकञ्च सश्रद्धैरास्थेयमिति । असन्तश्च काव्यालापा हेयाः, "काव्यालापांश्च वर्जयेत्" इति निषेधस्मरणादिति ।

तदेवं काव्यनाट्ययोः सत्स्वपि यशोव्यवहारवित्तादिषु बहुप्रयोजनेषु "काव्यं परनिर्वृतये" इति मम्मटोक्तो ब्रह्मास्वादसहोदरो रससाक्षात्कार एव परमं प्रयोजनम् । एवं च परमानन्दं सर्वेष्वपि रसेषु साक्षात्कुर्वन्तः सहृदया विश्वस्मिन् परिपूर्णं परानन्दरूपं परं ब्रह्मैव भावयन्त आदरनैरन्तर्यसत्कारसेवितया भावनया पूतात्मानः प्रागुक्तरूपं ब्रह्मैव विगलितवेद्यान्तरसम्पर्कं साक्षात्कुर्वन्तीति सुलभोऽयं निःश्रेयसप्रापकः काव्यपथः ॥



# ज्यामितिगणितयोस्तत्त्वार्थाधिगमे प्रयोगाः

श्रीमुरारिलालशर्मा, वा० सं० वि० वि० ज्यौतिषशास्त्रव्याख्याता ।

उत्पादकं यत् प्रवदन्ति बुद्धेरधिष्ठितं सत्पुरुषेण सांख्याः ।
कृत्स्नस्य व्यक्तस्य तदेकबीजमव्यक्तमीशं गणितं च वन्दे ॥

भारते गणितस्याध्ययनं ज्यौतिषाङ्गरूपेण जातम् । प्राचीनज्यौतिषपुस्तकेषु पाटीगणिताध्यायबीजगणिताध्यायज्योत्पत्त्यध्यायप्रभृतिभिरध्यायैर्गणितशास्त्रस्य मुख्यानां सिद्धान्तानां प्रतिपादनं दृश्यते । तत्त्वार्थस्तु वेदार्थ एव । ते च यज्ञकर्मप्रवृत्ताः । यज्ञादिश्च विशेषविधिना निर्मितेषु कुण्डेषु क्रियते । कुण्डनिर्माणार्थमङ्कगणितस्य रेखागणितस्य चापेक्षा वर्तते । अङ्कगणितमन्तरा कुण्डभुजानां तस्यार्द्धव्यासरूपाणामवयवानां निर्द्धारणं न संभवति । रेखागणितस्य ज्ञानमन्तरा तेषां विभिन्नस्वरूपाणां निर्माणं कर्तुं न शक्यते । कुण्डादिनिर्माणार्थमत्यन्तायाः सूक्ष्मताया अपेक्षा वर्तते । उक्तं च—

वक्ररेखात्मके कुण्डे यो जुहोति जनोऽधमः ।
तस्य प्राणो धनं पुत्रं जाया भाग्यं च नश्यति ॥

कुण्डादिनिर्माणार्थं भारतीयैर्विशेषरूपेण रेखागणितस्य तत्त्वानां सामान्यतोऽङ्कगणितस्य चाध्ययनं कृतमासीत् ।

वेदप्रतिपादिता यज्ञाः कालविशेषे संपादनीया भवन्ति । कालावबोधाय गणितशास्त्रस्य साहाय्येन भारतीयैर्ज्यौतिषशास्त्रस्याध्ययनं कृतम् । उक्तं च भास्कराचार्येण ग्रहगणिताध्याये—

वेदास्तावद् यज्ञकर्मप्रवृत्ता यज्ञाः प्रोक्तास्ते तु कालाश्रयेण ।
शास्त्रादस्मात् कालबोधो यतः स्याद् वेदाङ्गत्वं ज्यौतिषस्योक्तमस्मात् ॥

ज्यौतिषशास्त्रस्याध्ययनार्थं द्विविधं व्यक्तमव्यक्तं च गणितमपेक्ष्यते । उक्तं च भास्कराचार्येण—

द्विविधगणितमुक्तं व्यक्तमव्यक्तयुक्तं
तदवगमननिष्ठः शब्दशास्त्रे वरिष्ठः ।

## सारस्वती सुषमा

यदि भवति तदेदं ज्यौतिषं भूरिभेदं
प्रपठितुमधिकारी सोऽन्यथा नामधारी ॥

एवं वेदार्थप्रतिपादकस्य कालादेर्ज्ञानार्थं ज्यौतिषाङ्गरूपेण गणितस्याध्ययनं प्रारब्धम्, तथापि काले गतेऽस्य स्वतन्त्रशास्त्ररूपेण विकासो जातः। व्यक्तगणितोपयोगिसूत्राणां निर्माणाय बीजात्मकानामक्षराणां प्रयोगः प्रारब्धः। स्थूलादङ्कजगतो गणितशास्त्रस्य सूक्ष्मरूपेऽव्यक्तगणिते प्रवेशेनैव गणितेन दार्शनिकं स्वरूपं स्वीकृतमासीत्। गणितस्य सृष्टिः संख्यात्मिका वर्तते। तत्र धनर्णादयो वास्तवाः संख्या अवास्तवाः संख्या ऋणाङ्कमूलरूपा एवंविधाः कल्पिताः सन्ति, येषां साहाय्येन गणितस्य सूत्राणां साहाय्येन च व्यवहारजगतो विज्ञानजगतश्च सूक्ष्मतत्त्वनिर्द्धारणेऽतीव साहाय्यं प्राप्यते। प्रारम्भकाल एव गणिते संख्याद्वयस्य कल्पना वर्तते। तत्रैकं शून्यमपरमनन्तश्च। अनन्तस्य खहरेत्यपरा संज्ञा। यदि कस्याश्चित् संख्याया बहवो भागाः क्रियन्ते, तर्हि तस्या मानं स्वल्पतरं जायते। अथ यदि कस्याश्चित् सावधिकसंख्याया अनन्ता भागा क्रियन्ते, तदा तस्य मानं शून्यं जायते। अथवा गणितभाषायाम् —

$$\underset{न \rightarrow \infty}{सी} \frac{१}{न} = ०.$$

एवमेव यदि काचित् संख्या भिन्नात्मिकयोत्तरोत्तरं स्वल्पया संख्यया विभज्यते, तर्हि मानं वर्धते। अथ च पूर्वप्रदर्शितरीत्या भिन्नात्मिकाऽत्यन्तं स्वल्पा (अनन्ताल्पा वा) संख्या शून्यमेव भवति। अतः शून्येन भाजिता संख्या खहरशब्देनोच्यते। खहरस्य मानमाधुनिकगणितभाषायाम्—

$$\underset{अ \rightarrow ०}{सी} \frac{१}{अ} = \infty.$$

एवंरूपेण विचारेण स्वल्पतमाया महत्तमायाश्च संख्याया स्वरूपमेकरूपमेव। उभयत्रानन्तशब्देन शून्याङ्केन च संबन्धः। अनन्तसंख्याया एकाऽपरा विशेषतेयं वर्तते यत्तत्र बहूनां संख्यानां प्रवेशे निर्गमे वा तस्या अनन्तत्वं न व्याहन्यते। उक्तं च भास्कराचार्येण—

अस्मिन् विकारः खहरे न राशावपि प्रविष्टेष्वपि निःसृतेषु।
बहुष्वपि स्याल्लयसृष्टिकालेऽनन्तेऽच्युते भूतगणेषु यद्वत् ॥

## ज्यामितिगणितयोस्तत्त्वार्थाधिगमे प्रयोगाः

शून्यवादस्यानन्तवादस्य च जगतस्तत्त्वार्थप्रतिपादनाय दर्शनशास्त्रेऽपि चर्चा दृश्यते। एवं यद्यपि गणकाः स्वसंख्याजगतो निर्माणे किञ्चिदपि पदार्थविशेषं न चिन्तयन्ति, तथापि तेषां संख्यानामर्थानुसारेण दार्शनिकतत्त्वार्थबोधेऽतीव साहाय्यमभवत्।

भौतिकानां तत्त्वानामन्वेषणाय गणितेन महत्कार्यं संपादितम्। विश्वस्य किं स्वरूपं कथं चास्य निर्वाह इति प्रश्नयोरुत्तरं दातुं गेलेलियो न्यूटनप्रभृतिभिर्विशेषतो न्यूटनमहोदयेनाणूनां विश्वस्य कल्पना कृता। परस्पराकर्षणवशतः स्थितिमज्जगदिदं बलसिद्धान्तैराधारितं कल्पितम्। स्वीयाकर्षणसिद्धान्तो न्यूटनमहोदयेन गणितसमीकरणैरुपन्यस्तः। यथा आकर्षणबलम्

$= \frac{\text{ग मा}_1 \text{ मा}_2}{\text{दू}}$, अत्र ग=आकर्षणस्थिराङ्क, $\text{मा}_1$, $\text{मा}_2$, परस्परमाकर्षणवतः पदार्थद्वयस्य भारमात्रे, दू=तयोर्मध्ये वर्तमानं दूरत्वम्। न्यूटनमहोदयस्य द्वितीयेन गतिनियमेनाकर्षणबलस्य समीकरणद्वारा त्वरणेन ( Acceleration ) संबन्धः। त्वरणाद् गतिवेगस्य ( Velocity ) ज्ञानं जायते। एवं गणितस्य समीकरणानां साहाय्येन न्यूटनमहोदयेन सर्वप्रथमं प्राचीनभौतिकशास्त्रस्य ( Classical physics ) स्वरूपं प्रतिपादितमासीत्।

यथा यथा गणिते विकासो भवति, भौतिकशास्त्रस्योपलब्धज्ञानप्रयोगैर्नूतना अनुभवाश्च जायन्ते, तथा तथा भौतिकशास्त्रे सुसूक्ष्मता समायाति। यथा प्राचीनभौतिकशास्त्रेऽणुरविभाज्यः स्वीकृतः। कालान्तरे च विद्युतश्चुम्बकस्य च सिद्धान्तानामध्ययनेनाणोरपि 'इलेक्ट्रन-प्रोटोन-न्यूट्रन'प्रभृतय उपविभागा लब्धाः। पदार्थस्य मूलरूपमणुरूपं नास्त्यपि तु विद्युत्कणरूपमस्तीति इदानीं सर्वैः स्वीक्रियते। अस्य भौतिकजगतो न्यूटनप्रतिपादितानि घर्षण-रसायन-Frictional. Chemical ) विस्तारसंकोच-( Elastic )प्रभृतीनि बलानि विद्युच्चुम्बकबलान्येव। तथाप्याकर्षणबलस्य नात्रान्तर्भाव इति कृत्वाद्यत्वे पदार्थस्थितिनिरूपकं सिद्धान्तद्वयं वर्तते। एकस्तु सूक्ष्माणां विद्युत्कणानां निरूपको मात्रासिद्धान्तः ( Quantum Mechanics ), अपरश्चाकर्षणसंबन्धिसिद्धान्तानां प्रतिपादकः सापेक्षवादः। उभयत्र सिद्धान्ते रेखागणितीयः क्षेत्रसिद्धान्तः स्वीकृतः। अर्थाद् यत्र विद्युच्चुम्बकयोः प्रभावो वर्तते, तत्र तस्य क्षेत्रविशेषः, चाकर्षणस्य प्रभावस्तत्राकर्षणक्षेत्रं च जायते। तत्र विद्युच्चुम्बकपदार्थं आकर्षणप्रभाविताश्च पदार्थास्तस्य क्षेत्रविशेषस्य ज्यामितेरनुसारं विशेषरूपेण व्यवहारं कुर्वन्ति, यस्य प्रभावो यन्त्राणां बलतः प्रत्यक्षगोचरीभवति। गणितप्रतिपादितैः समीकरणैः

क्षेत्रसिद्धान्तानां बोधो भवति। तानि समीकरणानि च क्षेत्रसमीकरणानि कथ्यन्ते। तत्र च बहूनां स्थिराङ्कप्रयोगो दृश्यते, येषां केवलं गाणितिकी सत्ता। गणितभाषयैवेदानीन्तनस्य भौतिकस्य जगतो व्याख्या दृश्यते। मात्रासिद्धान्तस्यातिमहत्त्वपूर्णः सिद्धान्तः प्लैङ्कमहोदयेन—

ई = ह·वे, इति गणितसूत्रेणोपनिबद्धः। अत्र ई=शक्तिः ( Energy ) वे= प्रकाशावृत्तिः ( Frequency of radiation ) ह=प्लैङ्कमहोदयस्य स्थिराङ्कः। एतत्सदृश-मेव तरङ्गमात्रा ( Wave mechanics ) सिद्धान्ते डिब्रोग्लीमहोदयेन तरङ्गसमीकरणं प्रतिपादितम्। तद्यथा—

$$त = \frac{ह}{मा\ वे}$$ यत्र त=इलेक्ट्रोनाख्यस्य विद्युत्कणस्य तरङ्गमात्रा, ह=प्लैङ्कस्थिराङ्कः मा = विद्युत्कणमात्रा, वे=विद्युत्कणवेगः। एभिः समीकरणैर्जगतो मूलरूपाणां इलेक्ट्रोन-प्रोटोन-न्यूट्रनप्रभृतीनां विद्युत्कणानां वास्तविकतत्त्वान्वेषणे महत्कार्यं संपादितम्।

आकर्षणक्षेत्रसिद्धान्तविषये च आइन्स्टाइनमहोदयेन लारेंजमहोदयस्य स्थानान्तर-समीकरणानां विशेषां व्याख्यां कृत्वा सापेक्षवादस्य विशेषसिद्धान्तः कालान्तरे च सामान्य-सिद्धान्तः स्थापितः। अयं सिद्धान्तस्तु गणितभाषायामेव वर्तते। गॉसमहोदयस्य वक्राणां ज्यामितेः सदिशचलनभजनस्य ( Tenser Calculus ) ज्ञानमन्तरा नास्य सम्यग्बोधो भवति। तत्राइ-न्स्टाइनमहादयेन न्यूटनमहोदयस्य बलाधारिताकर्षणसिद्धान्तानां खण्डनं कृत्वा नूतनानि गति-समीकरणानि स्थापितानि, यानीदानीन्तनस्य नक्षत्रगणितस्य परमाणुगणितस्य च मुख्याधारत्वेन स्वीकृतानि।

गणकैर्विश्वस्य पदार्थानामेकत्वप्रतिपादनाय बहु प्रयासः कृतः। मानवेन्द्रियैः कल्पितानां रूपादीनां मिथ्यादृश्यमानानां बहूनां मूलपदार्थतत्त्वानां संख्या प्रतिदिनं क्षीयते। प्रथमं विद्युत् चुम्बकं च पदार्थद्वयं स्वीक्रियते स्म। परं तयोः क्षेत्रविशेषाणामध्ययनेन तयोरेकरूपत्वं सर्वैः स्वीक्रियते। पदार्थमूलकेऽणौ विद्युत्कणे च नेदानीं भेदः। आइन्स्टाइनमहोदयेन तु मात्रा-शक्त्योरभेदः प्रतिपादितः। तस्य द्योतकं समीकरणं चेदम् $इ = मा \cdot प्र^2$ अत्र इ=शक्तिः, मा=पदार्थमात्रा, प्र=प्रकाशवेगः। अद्यत्वे याणुशक्तेः कल्पना, तस्या मूलाधारं समीकरण-मिदमेव वर्तते।

## ज्यामितिगणितयोस्तत्त्वार्थाधिगमे प्रयोगाः

यद्यपि विद्युच्चुम्बकक्षेत्रमाकर्षणक्षेत्रं च पृथग्रूपेण स्वीक्रियते, अधीयते च भौतिकवैज्ञानिकैः, तथापि तयोर्महत्साम्यं वर्तते। यथा विद्युत्कणानि 'इलेक्ट्रन'प्रभृतीनि पदार्थबीजं ( Nucleus ) परितो भ्रमन्ति, तथैव सर्वे ग्रहाः सूर्यं परितो भ्रमन्ति। पृथ्वी स्वयमपि महच्चुम्बकं वर्तते। चुम्बकदिक्सूचकयन्त्रस्य ( Megnatic compass ) प्रयोगेणास्य सम्यग्ज्ञानं भवति। अत एव आइन्स्टाइनमहोदयेन विद्युच्चुम्बकक्षेत्रस्याकर्षणक्षेत्रस्य चैकरूपत्वं संपादयितुं महान् प्रयत्नः कृतः। बहुवर्षाणामध्यवसायेन तैस्तेषां समीकरणानामाविष्कारः कृतो यानि विद्युच्चुम्बकक्षेत्राण्याकर्षणक्षेत्राणि च बोधयन्ति। तस्य नूतनानि समीकरणान्यैक्यक्षेत्रसमीकरणानि ( Unified field equations ) इति नाम्ना प्रथितानि।

विश्वस्य स्वरूपं तस्येयत्तां च ज्ञातुं वैज्ञानिकैर्गणकैश्च महान् प्रयासः कृतः। तत्र गणकैर्विश्वस्य वक्रताया (Curvature) अध्ययनं संपाद्य वक्रतात्रिज्यानयनसमीकरणानि प्रतिपादितानि। अस्मिन् प्रसङ्गे लेमित्रे-एडिंगटन-आइन्स्टाइनप्रभृतीनां नामानि मुख्यतः समायान्ति। तत्र आइन्स्टाइनमहोदयेन गोलरूपस्य सान्तस्य विश्वस्य कल्पना कृता, तत्र च विश्वव्यासः $२१ \times १०^{२२}$ माइलतुल्यः स्वीकृतः। इदं विश्वस्वरूपं भारतीयमतसदृशमेव वर्तते। भारतीयैर्गणकैर्विश्वस्य ब्रह्माण्डत्वं स्वीकृतम्। ब्रह्माण्डकक्षाया व्यासस्यापि वर्णनं तत्रभवता भास्कराचार्येण सिद्धान्तशिरोमणावेवं कृतः—

कोटिघ्नैर्नखनन्दषट्कनखभूभूभृद्भुजङ्गेन्दुभि-
ज्योतिःशास्त्रविदो वदन्ति नभसः कक्षामिमां योजनैः।
तद्ब्रह्माण्डकटाहसंपुटतटे केचिज्जगुर्वेष्टनं
केचित् प्रोचुरदृश्यदृश्यकगिरिं पौराणिकाः सूरयः॥

अत्र प्रतिक्षणं विस्तारं गच्छतो विश्वस्य व्यासो देशकालसापेक्ष इति यद्यपि बहुकालं प्राङ्निर्द्धारितो ब्रह्माण्डव्यास आधुनिकैर्निर्धारितमानेन तुल्यो नास्ति, तथापि सिद्धान्तरूपेण नूतनैरपि भारतीयस्यैव सिद्धान्तस्य पोषणं कृतम्॥



# सन्ध्याविमर्शः

श्री के० पी० नारायणशास्त्री, सरस्वतीभवनम्, वाराणसी ।

विघ्नध्वान्तनिवारणैकतरणिर्विघ्नाटवीहव्यवाट्
विघ्नव्यालकुलस्य मत्तगरुडो विघ्नेभपञ्चाननः ।
विघ्नोत्तुङ्गगिरिप्रभेदनपविर्विघ्नाद्रिकुम्भोद्भवः
विघ्नाघौघघनप्रचण्डपवनो विघ्नेश्वरः पातु नः ॥

सदा बालरूपापि विघ्नाद्रिहन्त्री
महादन्तिवक्त्रापि पञ्चास्यमान्या ।
विधीन्द्रादिमृग्या गणेशाभिधाना
विधत्तां श्रियं कापि कल्याणमूर्तिः ॥

उपास्यमाना विप्रेन्द्रैः सन्ध्यासु च तिसृष्वपि ।
सद्यः प्रसीद मे मातः! सन्ध्याविद्ये सरस्वति ॥

अकारादिक्षकारान्तवर्णावयवशालिनी ।
वीणापुस्तकहस्ताऽव्यात् प्रणो देवी सरस्वती ॥

या वर्णपदवाक्यार्थगद्यपद्यस्वरूपिणी ।
वाचि नर्तयतु क्षिप्रं मेधां देवी सरस्वती ॥

श्रीशिवाचार्यवर्याद्यां शङ्कराचार्यमध्यमाम् ।
अस्मदाचार्यपर्यन्तां वन्दे गुरुपरम्पराम् ॥

आनन्दमानन्दघनं प्रसन्नं ज्ञानस्वरूपं निजबोधयुक्तम् ।
योगीन्द्रमीड्यं भवरोगवैद्यमस्मद्गुरुं सन्ततमानतोऽस्मि ॥

श्रीगौर्या सकलार्थदं निजपदाम्भोजेन मुक्तिप्रदं
प्रौढं विघ्नवनं हरन्तमनघं श्रीढुण्ढितुण्डासिना ।
वन्दे चर्मकपालिकोपकरणैः वैराग्यसौख्यात्परं
नास्तीति प्रदिशन्तमन्तविधुरं श्रीकाशिकेशं शिवम् ॥

सृष्ट्वा स्वात्मनि मायया जगदिदं तत्र प्रविष्टं च यद्
धीतादात्म्यमुपेत्य भोग्यमनिशं भुङ्क्ते मुखैः पञ्चभिः ।
एकं सद्गुणभेदतो हरिहरब्रह्मात्मतामभ्यगात्
तत्सद्बोधसुखात्मकं परमजं ब्रह्माहमस्म्यद्वयम् ॥
यश्शिवो नामरूपाभ्यां या देवी सर्वमङ्गला ।
तयोः संस्मरणात् पुंसां सर्वतो जयमङ्गलम् ॥
नन्दहस्तमवलम्ब्य पाणिना मन्दमन्दमरविन्दलोचनः ।
सञ्चरन् कनककिङ्किणीरवः सन्ततं मम तनोतु मङ्गलम् ॥

इह खलु—

चतुरशीतिलक्षेषु शरीरेषु शरीरिणाम् ।
न मानुष्यं विनाऽन्यत्र तत्त्वज्ञानन्तु लभ्यते ॥
अत्र जन्मसहस्राणां सहस्रैरपि पार्वति ।
कदाचिल्लभते जन्तुर्मानुष्यं पुण्यसञ्चयात् ॥

इत्युक्तरीत्या चतुरशीतिलक्षसंख्याकप्राणिनिकायेषु जन्तूनां दुर्लभतमं मानुषत्वमामनन्त्यभियुक्ताः । तथा हि—

जन्तूनां नरजन्मदुर्लभमतः पुंस्त्वं ततो विप्रता
तस्माद्वैदिकधर्ममार्गपरता विद्वत्त्वमस्मात्परम् ।
आत्मानात्मविवेचनं स्वनुभवो ब्रह्मात्मना संस्थिति-
र्मुक्तिर्नो शतकोटिजन्मसु कृतैः पुण्यैर्विना लभ्यते ॥ इति ।

तथा च मैत्रायणीयानामुपनिषदि (श्रुतिः)—"जालेनेव खचरः कृतस्यानुफलैरभिभूयमानः सदसद्योनिमापद्यत इत्यवाङ्न्योर्ध्वावागगतिद्वन्द्वैरभिभूयमानः परिभ्रमति" इति ।

व्याख्या—वृक्षकोटराकाशे सञ्चरन् कोशकारः पक्षी वा यथा आत्मनैव कोशं कृत्वा तेनात्मानं निबध्नाति तद्वदित्यर्थः । एवं कृतस्य शुभाशुभलक्षणस्य कर्मणः पश्चादवश्यंभाविफलैः सुखदुःखैः परवशीक्रियमाणो यथाकर्म यथाश्रुतं सदसद्योनिमापद्य संसारे परिभ्रमतीति श्रुत्यर्थः ।

श्रुतिः—"इत्युपक्रम्य चतुर्जालं चतुर्दशविधं चतुरशीतिधा परिणतं भूतगणम्" इति ।

व्याख्या—चत्वारि जालानि परिच्छेदकानि यस्मिंस्तत् तथा जरायुजाण्डजस्वेदजोद्भिज्ज-रूपैर्जालैः परिच्छिन्नम् । भूराद्यूर्ध्वलोकसप्तकातलवितलसुतलरसातलतलातलमहातलपाताताख्याधोलोकसप्तकात्मकचतुर्दशप्रकारभिन्नं जरायुजाद्यवान्तरभेदेन पुनश्चतुरशीतिलक्षप्रकारतामापन्नं भूतजातमित्यर्थः ।

उक्तक्रमेणानेकजन्मानुष्ठितसुकृतकर्मपरिपाकवशादुपनतं मानुषं जन्म, तच्च प्राप्य—

सोपानभूतं मोक्षस्य मानुष्यं प्राप्य दुर्लभम् ।
यस्तारयति नात्मानं तस्मात्पापतरोऽत्र कः ॥

इत्युक्त्या यथा सार्थक्यमश्नुवीत तथाऽवश्यं सर्वैरपि निरन्तरं प्रयतितव्यं जनिमद्भिः परमपुरुषार्थलाभायेति सकलजनसम्मतः पन्थाः । तथा हि—

महापुण्यप्रभावेण मानुषं जन्म लभ्यते ।
यस्तत्प्राप्य चरेद्धर्मं स याति परमां गतिम् ॥

इति मानवं वचनमिममाशयमुपष्टम्भयति ।

धर्मश्चार्थश्च कामश्च त्रितयं जीविते फलम् ।
एतत्त्रयमवाप्तव्यमधर्मपरिवर्जितम् ॥ इति च ।

'धर्मादर्थश्च कामश्च' इति वचनेन, अर्थकामयोरपि धर्माधीनत्वाच्च धर्मोऽवश्यमनुष्ठेयता-कोटिमाटीकते । आह च भगवानाम्नायः—"सत्यं वद धर्मं चर", "धर्मो विश्वस्य जगतः प्रतिष्ठा", "धर्मे सर्वं प्रतिष्ठितम्" इत्यादि ।

ततश्चाप्युत्तमं जन्म लब्ध्वा चेन्द्रियसौष्ठवम् ।
न वेत्त्यात्महितं यस्तु स भवेदात्मघातकः ॥

इति हिताकरणे आत्महत्यादोषवचनाच्च । अभियुक्ता आमनन्ति—

वाताभ्रविभ्रममिदं वसुधाधिपत्यम्
आपातमात्रमधुरो विषयोपभोगः ।
प्राणास्तृणाग्रजलबिन्दुसमा नराणां
धर्मः सखा परमहो परलोकयाने ॥ इति,

अर्था गृहे निवर्तन्ते श्मशाने मित्रबान्धवाः ।
सुकृतं दुष्कृतं चैव गच्छन्तमनुगच्छति ॥

इति च धर्मस्यैवेहामुत्र सुखहेतुता समभिधीयते । स्थिते चैवम्—

आत्मैव यदि नात्मानमहितेभ्यो निवारयेत् ।
कोऽन्यो हितकरस्तस्मादात्मानं तारयिष्यति ॥ इति शिवोक्तेः,

ब्राह्मण्यं बहुभिरवाप्यते तपोभि-
स्तल्लब्ध्वा न रतिपरेण हेलितव्यम् ॥

इति महाभारतोक्तेश्चातिदुर्लभं ब्राह्मण्यमवाप्तवतामवश्यानुष्ठेयकर्माणि मन्वादिपरमर्षिप्रणीतप्रबन्धेषु बहुलं सुप्रथितानि सन्ति । तत्र षट्कर्मसंज्ञयाख्यातस्य ब्राह्मणस्य—

स्नानं सन्ध्या जपो होमो देवतानाञ्च पूजनम् ।
आतिथ्यं वैश्वदेवञ्च षट् कर्माणि दिने दिने ॥

इति पराशरस्मृतौ 'दिने दिने' इति वीप्सायां द्विरुक्त्या "अहरहः सन्ध्यामुपासीत", "वसन्ते वसन्ते ज्योतिषा यजेत" इत्यादिवत् स्नानसन्ध्यादिकर्मणां नित्यत्वं स्मर्यते । येषामननुष्ठाने महान् प्रत्यवायः स्मर्यते—

विहितस्याननुष्ठानाद् निन्दितस्य च सेवनात् ।
अनिग्रहाच्चेन्द्रियाणां नरः पतनमृच्छति ॥ इत्यत्र ।

विप्रो वृक्षो मूलकान्यस्य सन्ध्या
वेदाः शाखा धर्मकर्माणि पत्रम् ।
तस्मान्मूलं यत्नतो रक्षणीयं
छिन्ने मूले नैव शाखा न वृक्षः ॥

इत्यादौ वृक्षरूपकविधया ब्राह्मणरूपवृक्षस्य सन्ध्यावन्दनाख्यनित्यकर्मणो मूलत्वं वदन् मूलनाशे सर्वनाशापत्त्या महाप्रत्यवायं विज्ञापयति । अतोऽनुष्ठाय नित्यकर्माणि बहुविधानेकजन्मानुष्ठितपरमतपःफलभूतमिदं ब्राह्मण्यमतिश्रद्धया संरक्षणीयम्,

धिगस्तु जन्म तेषां वै कृतघ्नानान्तु पापिनाम् ।
ये सर्वमातरं सन्ध्यां स्वोपास्यां न भजन्ति हि ॥

इति गर्हावचनात् ।

श्रुतिस्मृती ममैवाज्ञे यस्तामुल्लङ्घ्य वर्तते ।
आज्ञाच्छेदी मम द्वेष्यः स मे वध्यश्च जायते ॥

इति प्रमाणवचनमनुसृत्य भगवदाज्ञारूपश्रुतिस्मृतिविहितनित्यकर्मातिक्रमणं लोके स्वाम्याज्ञोल्लङ्घने भृत्यानां तद्द्वेषपात्रत्वतद्वधार्हत्ववद्भगवद्द्वेषपात्रतां तद्वधार्हतां चापादयतीति श्रेयस्कामैरतितरां स्वविहितनित्यकर्मानुष्ठानविहितादरैर्भाव्यमिति निश्चप्रचमुक्तं भवति ।

तत्र शुचिः कर्माणि कुर्वीत—

अस्नातस्तु पुमान्नार्हो जप्याग्निहवनादिषु ।
प्रातः स्नानं तदर्थं तु नित्यस्नानं प्रकीर्तितम् ॥

इत्यादिप्रमाणानुसारेण प्रातर्ब्राह्मे मुहूर्ते समुत्थाय शरीरचिन्तां निर्वर्त्य कृतशौचविधिः सन् दन्तधावनपूर्वकं स्नानार्थं यथासौकर्यं नद्यादिकं गत्वा यथावत् स्नात्वा सन्ध्यादिनित्यकर्माण्यनुष्ठेयानि । तथा हि भगवान् याज्ञवल्क्य आह—

शरीरचिन्तां निर्वर्त्य कृतशौचविधिर्द्विजः ।
प्रातस्सन्ध्यामुपासीत दन्तधावनपूर्वकम् ॥
ब्राह्मे मुहूर्ते चोत्थाय चिन्तयेदात्मनो हितम् ।
गुरुं विष्णुं नमस्कृत्य मातापित्रोस्तथैव च ।
रात्रौ तु पश्चिमो यामो मुहूर्तो ब्राह्म उच्यते ॥ इत्यादि ।

## ब्राह्मे मुहूर्ते उत्थानविचारः

त्रिंशन्मुहूर्तात्मकाहोरात्रस्याष्टाविंशतितमो मुहूर्तो ब्राह्मसंज्ञया आख्यायते । तत्र चावश्यमुत्थानं करणीयम् । तथा च बृहन्मनुः—

ब्राह्मे मुहूर्ते देवानां पितॄणाञ्च समागमः ।
जागरस्तत्र कर्तव्यः पितृसंमाननं हि तत् ॥
यदीच्छेच्छाश्वतीं सिद्धिं यमस्यादर्शनं तथा ।
सततं तेन कर्तव्यो ब्राह्मे काले प्रजागरः ॥ इति ।

तथा च ब्राह्ममुहूर्तस्य देवपितृसमागमकालत्वात्पितृसंमाननावश्यकतया यमादर्शनादिफलविशेषजनकत्वाच्च तत्रोत्थानमवश्यं कर्तव्यमित्युक्तं भवति ।

## अथ स्नानविधिः

मन्त्रपूतैर्जलैः स्नानं प्राहुः स्नानफलप्रदम् ।
न वृथा वारिमग्नानां यादसामिव तत्समम् ॥

अविदित्वैव यः स्मार्तं विधानं स्नानमाचरेत् ।
स याति नरकं घोरमिति धर्मस्य शासनम् ॥

इति वचनात्तिरश्चामिव वृथा वारिमज्जनं स्नानफलं न जनयेत् । अतो यथाविधि कर्तव्यम् ।

स्नानस्य पञ्चाङ्गत्वमुक्तम्—

सङ्कल्पः सूक्तपठनं मार्जनं चाघमर्षणम् ।
देवादितर्पणं चैव पञ्चाङ्गं स्नानमुच्यते ॥ इति ।

तत्र तिथिवारनक्षत्रादिसङ्कीर्तनात्मकः सङ्कल्पः प्रथमाङ्गम् । ततो जलाधिपतेर्वरुणस्य सूक्तं पठेत् । आपोहिष्ठादिमन्त्रैर्मार्जनं-तार्तीयीकमङ्गम् । ऋतञ्च सत्यञ्चाभीद्धादित्याद्यघमर्षणसूक्तं चावश्यं पठनीयम्, "यथाश्वमेधावभृथः, एवं स्नानेऽघमर्षणम्" इति वचनात् ; इदं तुरीयमङ्गम् । देवर्षिपितृतर्पणं पञ्चममङ्गम् । अस्यावश्यानुष्ठेयताबीजमुक्तं वाधूलस्मृतौ स्नानप्रकरणे—

स्नानार्थमभिगच्छन्तं देवाः पितृगणैः सह ।
वायुभूतास्तु गच्छन्ति तृषार्ताः सलिलार्थिनः ॥
तस्मान्न पीडयेद्वस्त्रमकृत्वा पितृतर्पणम् । इति ।

गुणा दश स्नानकृतां हि पुंसां
रूपञ्च तेजश्च बलं च शौचम् ।
आयुष्यमारोग्यमलोलुपत्वं
दुःस्वप्ननाशश्च तपश्च मेधा ॥

इति विश्वामित्रस्मृतौ नित्यस्नानं दशगुणाधायकतया प्रस्तूयते । एवं स्नात्वा—

यन्मया दूषितं तोयं शारीरमलसञ्चयात् ।
तद्दोषपरिहाराय यक्ष्माणं तर्पयाम्यहम् ॥

इति मन्त्रेण तीरे यक्ष्मतर्पणमपि करणीयम् । ततः—

लतागुल्मेषु वृक्षेषु वर्तन्ते पितरो मम ।
तेषामाप्यायनार्थन्तु इदमस्तु शिखोदकम् ॥

इति शिखोदकं निनीय—

ये के चास्मत्कुले जाता अपुत्रा गोत्रजा मृताः ।
ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीडनोदकम् ॥

इति तीरे वस्त्रं निष्पीड्य, आचम्य, शुष्कवस्त्रेण शिरःप्रभृति सर्वाङ्गं परिमृज्य, पवित्रं शुष्कं वासः परिधाय, पुनः पादौ प्रक्षाल्याचम्य भस्मधारणं कुर्यात् । तथा हि—"अग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं ह वा इदं भस्म" इति मन्त्रैर्भस्माभिमन्त्र्य "ओमापो ज्योती रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम्" इति जलेन संमिश्र्य त्र्यायुषं त्र्यम्बकमित्यादिमन्त्रेण त्रिपुण्ड्रं धारयेत् ।

## अथ सन्ध्याविचारः

तत्र छन्दोगश्रुतौ ब्रह्मवादिनो वदन्तीत्युपक्रम्य "कस्माद् ब्राह्मणः सायमासीनः सन्ध्यामुपास्ते ? कस्मात् प्रातस्तिष्ठन् ? का वा सन्ध्या ? कश्च सन्ध्यायाः कालः ? किञ्च सन्ध्यायाः सन्ध्यात्वम् ?" इति ब्रह्मवादिनां विचिकित्सामुपन्यस्य देवासुराख्यायिकोपन्यासमुखेनोक्ता विचिकित्साः समाहिताः । तथा हि—"देवाश्च वा असुराश्चास्पर्धन्त, तेऽसुरा आदित्यमभ्यद्रवन्, स आदित्योऽबिभेद्, तस्य हृदयं कूर्मरूपेणातिष्ठत्, स प्रजापतिमुपाधावत्, तस्य प्रजापतिरेतद् भेषजमपश्यत् । ऋतञ्च सत्यञ्च ब्रह्म चोङ्कारश्च त्रिपदाञ्च गायत्रीं ब्रह्मणो मुखमपश्यत्" इत्युक्त्वा "तस्माद् ब्राह्मणोऽहोरात्रस्य संयोगे सन्ध्यामुपास्ते सज्योतिषि, आज्योतिषो दर्शनात्, सोऽस्य सन्ध्याकालः । सा सन्ध्या, तत्सन्ध्यायाः सन्ध्यात्वं यत्सायमासीनः सन्ध्यामुपास्ते तया वीरस्थानं जयति । अथ यदपः प्रयुङ्क्ते ता विप्रुषो वज्रीभूत्वाऽसुरानपघ्नन्ति" इतीमां श्रुतिं हृदि निधाय याज्ञवल्क्यो मुनिः प्राह—

त्रिंशत्कोट्यस्तु विख्याता मन्देहा नाम राक्षसाः ।
प्रद्रवन्ति सहस्रांशुमुदयन्तं दिने दिने ॥
अहन्यहनि ते सर्वे सूर्यमिच्छन्ति खादितुम् ।
अथ सूर्यस्य तेषाञ्च युद्धमासीत् सुदारुणम् ॥
ततो देवगणाः सर्वे ऋषयश्च तपोधनाः ।
सन्धौ सन्ध्यामुपासीना यत् क्षिपन्त्यन्वहं जलम् ॥
ब्रह्मव्याहृतिसंयुक्तगायत्र्या चाभिमन्त्रितम् ।
तेनादह्यन्त ते दैत्या वज्रीभूतेन वारिणा ॥

एतद्विदित्वा यः सन्ध्यामुपास्ते संशितव्रतः।
दीर्घमायुः स विन्देत सर्वपापैः प्रमुच्यते ॥
यस्तु तां केवलं सन्ध्यामुपासीत स पुण्यभाक्।
तां परित्यज्य कर्माणि कुर्वन्नाप्नोति किल्बिषम् ॥
स हन्ति सूर्यं सन्ध्याया नोपास्तिं कुरुते तु यः।
ये हिंसन्ति सदा सूर्यं मोक्षद्वारमपावृतम्।
कथं मोक्षस्य संप्राप्तिर्भवेत्तेषां द्विजन्मनाम् ॥ इति।

निमित्तज्ञानपुरस्सरं सन्ध्यामुपासीनानां दीर्घायुष्यसर्वपापक्षयादिफलमुक्त्वा तत्परित्यागकारिणां किल्बिषप्राप्तिं मोक्षद्वारभूतसूर्यहत्यादोषञ्चाह। महाभारते च धौम्येन युधिष्ठिरं प्रति—

"स्वर्गद्वारं प्रजाद्वारं मोक्षद्वारं त्रिविष्टपम्"

इति मोक्षद्वारत्वमादित्यस्याभिहितम्।

सन्ध्यामुपासते ये तु सततं संशितव्रताः।
विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ॥

इति वचनाद् ब्रह्मलोकप्रापकत्वावगमात् सन्ध्याकर्मणः। ब्रह्मलोकमार्गश्च छान्दोग्य उक्तः— "तेऽर्चिसमभिसंभवन्ति, अर्चिषोऽहरहरह्न आपूर्यमाणपक्षमापूर्यमाणपक्षाद्यान् षडुदङ्ङेति मासांस्तान् मासेभ्यः संवत्सरं संवत्सराद्देवलोकं देवलोकाद्वायुं वायोरादित्यमादित्याचन्द्रमसं चन्द्रमसो विद्युतम्" इत्यादित्यद्वारा विद्युल्लोकपर्यन्तमागतमुपासकं "तत्पुरुषोऽमानवः स एनान् ब्रह्म गमयति" इत्यमानवपुरुषेण ब्रह्मलोकादागतेन ब्रह्मलोकनयनमुक्तम्।

"सूर्यद्वारेण ते विरजाः प्रयान्ति यत्रामृतः स पुरुषो ह्यव्ययात्मा"

इति मुण्डकोपनिषदि च सूर्यद्वारेण ब्रह्मलोकप्राप्तिराम्नायते। तथा च सन्ध्योपास्त्याभावे ब्रह्मलोकप्रापकादित्यहिंसकानां तद्द्वारा ब्रह्मलोकप्राप्तिः कथं घटेत ?

ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसञ्चरे।
परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम् ॥

इति ब्रह्मलोकाधिपतिना ब्रह्मणा सह ब्रह्मलोकं गतानां परपदप्राप्तिरूपमोक्षप्राप्तिरुच्यमाना पूर्वोक्तार्चिरादिमार्गपर्वान्तर्गतादित्यद्वारेति तस्य मोक्षद्वारत्वं धौम्येनोक्तम्।

ये हिंसन्ति सदा सूर्यं मोक्षद्वारमपावृतम् ।
कथं मोक्षस्य संप्राप्तिर्भवेत्तेषां द्विजन्मनाम् ॥

इति च वचनं मोक्षद्वारत्वं विवस्वतो ब्रूते । हारीतेन तु—

आदित्येन सह प्रातर्मन्देहा नाम राक्षसाः ।
युध्यन्ति वरदानेन ब्रह्मणोऽव्यक्तजन्मनः ॥

इति ब्रह्मणो वरदानेन मन्देहानामादित्येन सह प्रातर्युद्धं वर्णितम् । तत्र तैत्तिरीय-श्रुतिर्मूलम् । तथा हि—"रक्षांसि ह वा पुरोऽनुवाके तपोग्रमतिष्ठन्त तान् प्रजापतिर्वरेणोपा-मन्त्रयत । तानि वरमवृणीरन्नादित्यो नो योद्धेति । तान् प्रजापतिरब्रवीत् योधयध्वमिति । तस्मादुत्तिष्ठन्तं ह वा तानि रक्षांस्यादित्यं योधयन्ति" इति प्रजापतिवरदानेनादित्यं योधयन्ती-त्युक्त्वा "तदु ह वा एते ब्रह्मवादिनः सन्ध्यायां गायत्र्यभिमन्त्रिता आप ऊर्ध्वं विक्षिपन्ति, ता एता आपो वज्रीभूत्वा तानि रक्षांसि मन्देहारुणे द्वीपे प्रक्षिपन्ति" इति गायत्र्यभिमन्त्रितवज्री-भूताद्भिर्निरस्ता मन्देहारुणे द्वीपे प्रक्षिप्ता भवन्तीति वर्णितम् । अत एव याज्ञवल्क्येनोक्तं "प्रद्रवन्ति सहस्रांशुमुद्यन्तं दिने दिने" इति दिने दिने युद्धवर्णनं संगच्छते । अनन्तरञ्च हारीतेनोक्तम्—

उदकाञ्जलिनिक्षेपा गायत्र्या चाभिमन्त्रिताः ।
निघ्नन्ति राक्षसान् सर्वान् मन्देहाख्यान् द्विजेरिताः ॥ इति ।

राक्षसानां प्राणवियोगपर्यन्तहननं हारीतेनोक्तमिति न भ्रमितव्यम्, प्राणवियोगे मन्देहारुणद्वीपप्रक्षेपोक्त्यसंगतेः । प्राणवियोगजनकपीडासम्पादकप्रहाराभिभूताः पलायनपूर्वकं मन्देहारुणे द्वीपे पतिता इत्येवाशयः ।

ततः प्रयाति सविता ब्राह्मणैरभिरक्षितः ।
मरीच्याद्यैर्महाभागैः सनकाद्यैश्च योगिभिः ॥

इति हारीतेन वाक्येन मरीच्याद्याः सनकाद्याश्च निरन्तरमेतत्कर्म कुर्वत इति बोधितम् । तेन चाधुनाऽर्वाचीनैस्तदनुष्ठानाभावेऽप्यादित्योदयः सुष्ठु घटते । तथा चात्मनः श्रेयसे मरीच्यादिभि-रपि महाभागैरनुष्ठितं सन्ध्याकर्मानुतिष्ठेदिति भावः । "तस्मान्न लङ्घयेत् सन्ध्यां सायं प्रातः समाहितः" इत्युक्त्वा "उल्लङ्घयति यो मोहात् स याति नरकं ध्रुवम्" इति नरकप्राप्तिरूपं प्रत्यवायमकरणे विशदयन्निममाशयं याज्ञवल्क्योऽपि—

कामान्मोहाद्भयाल्लोभात् सन्ध्यां नातिक्रमेद् द्विजः ।
सन्ध्यातिक्रमणाद्विप्रो ब्राह्मण्यात् पतितो यतः ॥

इति पातित्यप्रयोजकत्वमाह । भगवानत्रिश्चेममाशयमाह—

नोपतिष्ठन्ति वै सन्ध्यां स्वस्थावस्थास्तु ये द्विजाः ।
हिंसन्ति ते सदा पापा भगवन्तं दिवाकरम् ॥ इति ।

विष्णुपुराणे च—

अनार्तश्चोत्सृजेद्यस्तु स विप्रः शूद्रसंमितः ।
प्रायश्चित्ती भवेच्चैव लोके भवति निन्दितः ॥

इत्यार्तत्वादिनिमित्तं विना सन्ध्यात्यागे शूद्रसमत्वादिदोषजातमप्युक्तम् ।

सन्ध्यामिष्टिं चरुं होमं यावज्जीवं समाचरेत् ।
न त्यजेत् सूतके वापि त्यजन् गच्छेदधो द्विजः ॥

इत्यधोगतिप्राप्तिपरिहाराय यावज्जीवमनुष्ठेयतोक्ता । अत एव पुलस्त्यः—

सूतके मृतके चैव सन्ध्याकर्म न संत्यजेत् ।
मनसोच्चारयेन्मन्त्रान् प्राणायाममृते द्विजः ॥

इति सूतकमृतकयोर्मानसमन्त्रोच्चारणविधानमाह । "सूतके कर्मणां त्यागः सन्ध्यादीनां विधीयते" इति मरीचिवचनं वाचिकमन्त्रोच्चारणविषयमिति ज्ञेयम् । पैठीनसिरपीममर्थमाह— "सूतके त्वञ्जलिं प्रक्षिप्य प्रदक्षिणं कृत्वा सूर्यं ध्यायन् नमस्कुर्यात्" इति । श्रौतं जलाञ्जलिदानादि सर्वथाऽनुष्ठेयं नान्यदिति शिष्टाः ।

एतावता छन्दोगश्रुतिपर्यालोचनया "अहोरात्रयोः संयोगे सन्ध्यामुपास्ते सोऽस्य सन्ध्याकालः" इत्यहोरात्रसन्ध्यारूपः सन्ध्याकाल इत्युक्तम् । "सा सन्ध्या तत्सन्ध्यायाः सन्ध्यात्वम्" इति च सन्ध्याकालाभिमानिदेवतावाचकत्वं सन्ध्याशब्दस्येत्युक्तं भवति । "सन्धौ सन्ध्यामुपासीत" इति स्मृतिः श्रौतमेवार्थमाह । देवतावाचकस्य सन्ध्यापदस्य लक्षणया तत्कालकर्तव्यकर्मपरत्वमित्यभिप्रायेण च—

स्नानं सन्ध्याजपो होमः देवतानाञ्च पूजनम् ।
आतिथ्यं वैश्वदेवञ्च षट् कर्माणि दिने दिने ॥

इत्यत्र सन्ध्याशब्दस्य कर्मपरत्वमेवादृतम् । देवासुरसंग्रामाख्यायिका च सन्ध्यानुष्ठाननिमित्तं प्रकटयति स्म "तस्य प्रजापतिरेतद्भेषजमपश्यत्" इत्यादिना । तथा चोक्तं तैत्तिरीयके पूर्वोक्तनिमित्तं विशदीकृत्यानन्तरम्—"यत्प्रदक्षिणं प्रक्रमन्ति तेन पाप्मानमवधुन्वन्त्युद्यन्तमस्तं यन्त-

मादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति । ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद" इत्यन्तवाक्येन प्रदक्षिणपूर्वकमुदयास्तमयकालिकादित्याभिध्यानं वर्णयित्वा "असावादित्यो ब्रह्म" इति ध्यानप्रकारमपि व्याचष्टे । एवं छन्दोगतैत्तिरीयश्रुतिमूलकत्वं सन्ध्यायाः सिद्धम् । इमं श्रौतार्थं मनसि निधाय तदनुष्ठानप्रकारमाह भगवान् बोधायनः—"अथातः सन्ध्योपासनविधिं व्याख्यास्यामः । तीर्थं गत्वा प्रयतोऽभिषिक्तः प्रक्षालितपाणिपादोऽप आचम्याब्लिङ्गाभिः प्रोक्ष्य अग्निश्च मा मन्युश्चेति सायमपः पीत्वा सूर्यश्च मा मन्युश्चेति प्रातः सपवित्रेण पाणिना सुरभिमत्याऽब्लिङ्गाभिरन्यैश्च पवित्रमन्त्रैरात्मानं प्रोक्ष्य प्रयतो भवति । ततः सूर्यायार्घ्यं निवेदयेत्" इति ।

सूर्यायैव तु गायत्र्या त्रिसन्ध्यास्वञ्जलिं क्षिपेत् ।
प्रातर्मध्याह्नयोस्तिष्ठन् सायमासीन एव वा ॥
मन्देहानां वधार्थाय प्रक्षिपेदुदकाञ्जलिम् ।
प्रायश्चित्तार्थमाचम्य मुच्यते दैत्यहत्यया ॥
प्रणवव्याहृतीभिश्च कृत्वात्मानं प्रदक्षिणम् ।
आचम्यैव ततस्तिष्ठन् ध्यायेत् सन्ध्यां समाहितः ॥ इति ।
उदये ब्रह्मरूपन्तु मध्याह्ने तु महेश्वरम् ।
सायाह्ने विष्णुरूपन्तु त्रिरूपन्तु दिवाकरम् ॥
अनुसन्ध्यमुपासीत सन्ध्यारूपं रविं द्विजः ।

इति सन्ध्यारूपमादित्यं प्रातर्मध्याह्नसायाह्नेषु ब्रह्मेश्वरविष्णुरूपं ध्यायेदित्युक्त्या त्रिमूर्तिरूपस्यादित्यस्य त्रिसन्ध्यारूपत्वमप्युक्तम् । कालभेदेन नामभेदमप्याह व्यासः—

गायत्री नाम पूर्वाह्णे सावित्री मध्यमे दिने ।
सरस्वती च सायाह्ने सैव सन्ध्या त्रिषु स्मृता ॥ इति ।

रूपभेदश्च तेनैवोक्तः—

गायत्री तु भवेद्रक्ता सावित्री शुक्लवर्णिका ।
सरस्वती तथा कृष्णा उपास्या वर्णभेदतः ॥ इति,
गायत्री ब्रह्मरूपा तु सावित्री रुद्ररूपिणी ।

सरस्वती विष्णुरूपा चोपास्या रूपभेदतः ॥
या सन्ध्या सा तु गायत्री त्रिधाभूता प्रतिष्ठिता ।

इति च त्रिमूर्तिरूपगायत्र्यादित्रिरूपविशिष्टसन्ध्यारूपमादित्यं सोऽहमस्मीत्युपासीतेति फलितम् । "अनुसन्ध्यमुपासीत सन्ध्यारूपं रविं द्विजः" इत्यास्यायमेवाशयः । "उद्यन्तमस्तं यन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान् सकलं भद्रमश्नुतेऽसावादित्यो ब्रह्मेति ब्रह्मैव सन् ब्रह्माप्येति य एवं वेद" इति तैत्तिरीयकश्रुत्युक्तादित्याभिध्यानमप्यनेन व्याख्यातम् ।

या सन्ध्या सा तु गायत्री त्रिधाभूता प्रतिष्ठिता ।
अभिन्नां प्रतिपद्येत गायत्रीं ब्रह्मणा सह ।
सोऽहमस्मीत्युपासीत विधिना येन केनचित् ॥

इति व्यासवचने च रक्तशुक्लकृष्णत्रिरूपत्रिमूर्तिरूपगायत्रीप्रतिपाद्यसवितृमण्डलान्तर्गतसच्चिदानन्दघनाद्वितीयपरब्रह्मैवाहमस्मीत्यभिन्नां प्रतिपद्येतेत्यस्य निष्कृष्टार्थः ।

ध्यानप्रदेशश्चन्द्रिकायामुक्तः—

गायत्रीं चिन्तयेद्यस्तु हृत्पद्मे समुपस्थिताम् ।
धर्माधर्मविनिर्मुक्तः स याति परमां गतिम् ॥

इति परमगतिप्राप्तिवचनेन "विद्वान् सकलं भद्रमश्नुते", "ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुतिप्रोक्तफलाशयो वर्णितः ।

अत्र पूर्वोक्तोपासनमेव मुख्यसन्ध्यावन्दनमिति चन्द्रिकामाधवीयादौ वर्णितम् । ललितासहस्रनामभाष्ये श्रीमान् भास्कररायमहाशयोऽप्येवमेवालेखीत् । असावादित्यो ब्रह्मेत्यभिध्यानवचनस्य च जीवद्दशायामिहैवं ब्रह्मरूपः प्रारब्धभोगान्ते ब्रह्माप्ययफलमुपदिशन्नाम्नायोऽपि तस्य प्राधान्यमसन्दिग्धमेवाह । तथा च मार्जनाद्यङ्गकलापानुष्ठानाशक्तौ राष्ट्रक्षोभमहापत्त्यादौ केवलाभिध्यानेन प्रधानभूतेनैव सन्ध्यानिर्वाहः सम्भवतीति महाभारते भगवान् व्यासो ब्रवीति—

देशक्षोभे महापत्तौ मार्जनार्घ्याद्यसम्भवे ।
सन्ध्यागतं सहस्रांशुं मन्त्रैः कुर्यादुपस्थितिम् ॥ इति ।

अत एव युद्धरङ्गे साङ्गानुष्ठानासमर्थैर्युधिष्ठिरादिभिः सकलाङ्गपरित्यागेनादित्याभिध्यानमात्रमनुष्ठितम्—

ते तथैव महाराज दंशिता रणमूर्धनि ।
सन्ध्यागतं सहस्रांशुं तथैव समुपतस्थिरे ॥

इति महाभारते व्यासः । अर्घ्यदानसन्ध्योपास्तिगायत्रीजपोपस्थानचतुष्टयस्य प्राधान्य-पक्षस्तु देशक्षोभाद्यभाव एवेति सिद्धान्तः । सन्ध्याकालश्च सूर्योदयात् प्राग्घटिकाद्वयात्मकः, 'रात्र्यन्तयामनाडी द्वे सन्ध्याकाल उदाहृतः" इति दक्षोक्तेः, "द्विनाडिका भवेत् सन्ध्या" इति गर्गोक्तेश्च ।

"उदयात् प्राक्तनी सन्ध्या घटिकाद्वयमीरिता" इति भगवान् बोधायनश्चाह । "प्रातःसन्ध्या त्रिनाडी स्यात् सायंसन्ध्या तथाविधा" इति स्मरणन्तु—"चत्वारीमानि कर्माणि सन्ध्यायां परिवर्जयेत् । आहारं मैथुनं निद्रां स्वाध्यायञ्च तथैव च ॥" इति वृद्धमनुवचनविषय-कम् । कालातिक्रमे प्रायश्चित्तार्घ्यकरणे याज्ञवल्क्य आह—

आचान्तो विधिवत्प्राणानायम्यार्घ्यं चतुर्थकम् ।
कालात्ययविशुध्यर्थं कृत्वा सन्ध्यां समाचरेत् ॥ इति,
चतुर्थमर्घ्यं गायत्र्या दद्यात् व्याहृतिसम्पुटम् ।
कालात्ययविशुद्ध्यर्थं त्रिसन्ध्यासु समाचरेत् ॥ इति च ।

इदमुदयात् पूर्वं मुख्यकालातिक्रमे द्रष्टव्यम् । उदयानन्तरन्तु "प्राणायामत्रयं कृत्वा सन्ध्याकर्म समाचरेत्" इत्युक्तम् ।

प्रातः काले त्रयं कुर्यात् संगवे द्वौ दशोपरि ।
षट्त्रिंशन्मध्यमे काले ततो न प्राणसंयमः ॥

इत्युदयानन्तरमर्धयामावधिगौणकालस्तत्र प्राणायामत्रयम् । तत ऊर्ध्वं षड्घटिकापर्यन्तं षट् प्राणायामाः, ततो द्वादशघटिकापर्यन्तं द्वादश, तत उपर्यहर्मध्यपर्यन्तं षट्त्रिंशत्प्राणायामाः, अहर्मध्यादूर्ध्वं न प्राणायामरूपं प्रायश्चित्तम्, अपि तु प्रातरतिक्रमेऽहरुपवासः सायमतिक्रमे रात्र्युपवासः । तथा च बोधायनः—

"प्रातरतिक्रमेऽहरुपवासः सायमतिक्रमे रात्र्युपवासः" इति ।

इदमबुद्धिपूर्वविषयम् । बुद्धिपूर्वं तु शङ्खोक्तप्रायश्चित्तं विज्ञेयम्—

सन्ध्यादिनित्यलोपे तु दिनमेकमभोजनम् ।
दिनद्वये त्रिरात्रं स्यात् कृच्छ्रार्धन्तु दिनत्रये ॥
दशाहे कृच्छ्रमेकं स्यादूर्ध्वं चान्द्रायणं चरेत् ।
चान्द्रायणं पराकञ्च मासादूर्ध्वं विधीयते ॥
ततोऽन्येवं प्रकल्पं स्याद्यावन्मासक्रमेण तु ।
वर्षादूर्ध्वं तु पतति नित्यकर्मबहिष्कृतः ॥ इति ।

संवर्तकस्त्वाह—

अर्घ्यप्रदानतः पूर्वमुदये समयेऽपि वा ।
गायत्र्यष्टशतं जप्यं प्रायश्चितं द्विजातिभिः ॥
उपासीत न चेत्सन्ध्यामग्निकार्यं न चेत्कृतम् ।
गायत्र्यष्टसहस्रं तु जपं कृत्वा विशुद्ध्यति ॥ इति ।

ऋग्विधाने मन्त्रजप उक्तः । मन्त्रस्तु—

यदा दीध्ये नदविषाण्येभिः परायद्भ्यो वहीये सखिभ्यः ।
न्युप्ताश्च बभ्रवो वाचमक्रतं येमीदेषां निष्कृतं जारिणीव ॥ इति ।
"कालात्यये त्वकृत्वैवं कृता सन्ध्या तु निष्फला"

इति संग्रहकारः ।

प्रदेशविशेषात् फलविशेषमाह सन्ध्याकर्मणि—

गृहे त्वेकगुणा सन्ध्या गोष्ठे दशगुणा स्मृता ।
शतसाहस्रिका नद्याम् अनन्तं विष्णुसन्निधौ ॥
बहिः सन्ध्या दशगुणा सहस्रं जाह्नवीजले । इति व्यासः,
ततः सन्ध्यामुपासीत बहिर्गत्वा यथाविधि ॥ इति हारीतश्च ।

## अथ मार्जनम्

आपोहिष्ठैस्तृचैः कुर्याद् मार्जनन्तु कुशोदकैः ।
प्रणवेन तु संयुक्तं क्षिपेद्वारि पदे पदे ॥
विप्रुषोऽष्टौ क्षिपेदूर्ध्वमधो यस्य क्षयाय च ।

रजस्तमोमोह( जातान् ) दोषान्नवैतान्नवभिर्दहेत् ।। इति व्यासः '

प्रतिपादं प्रणवयुक्तेन प्रोक्षणे फले विशेषमाह शौनकः—

नवप्रणवयुक्तेन आपो हिष्ठेत्यृचेन तु ।
संवत्सरकृतं पापं मार्जनान्ते विनश्यति ।। इति ।

अत्र बहुप्रमाणानुगुण्यात् शिष्टाचाराच्च पादान्तमार्जनमेव ज्यायः ।

मार्जनविधेरवश्यज्ञेयत्वमाह—

आपोहिष्ठेत्यृचा सम्यगुल्लेख्यं न च वेत्ति यः ।
न तस्य विद्यते सन्ध्या यथा शूद्रस्तथैव सः ।।

उल्लेखो मार्जनम् ।

अत्र हारीतो मार्जनं देवतीर्थेन कुर्यादित्याह—

"मार्जनार्चनबलिकर्मभोजनादि देवतीर्थे कुर्यात्" इति ।

धाराच्युतेन जलेन सन्ध्यानुष्ठानन्तु ब्रह्मणा निषिद्धम्—

धाराच्युतेन तोयेन सन्ध्योपास्तिर्विगर्हिता ।
न प्रशंसन्ति पितरो न प्रशंसन्ति देवताः ।। इति ।

मन्त्रपूतं जलं यस्माद् आपोहिष्ठाभिमन्त्रितम् ।
पतत्यशुचिदेशेषु तस्मात्तत् , परिवर्जयेत् ।। इति ,

उपवीती बद्धशिखः स्वाचान्तो द्विरनाकुलः ।
प्राङ्मुखः सततं विप्रः सन्ध्योपासनमाचरेत् ।। इति च ।

भगवान् व्यासः सन्ध्योपासन उपवीतित्वबद्धशिखत्वादिनियममुपदिशति—

भूमिष्ठमुदकं स्पृष्ट्वा प्रसव्येन करेण तु ।
मार्जनाद्याचरेद् विद्वान् सन्ध्याकर्मसु सर्वदा ।। इति ।

नद्यादौ सव्यकरेणोदकस्पर्शनपूर्वकमार्जनाचरणं याज्ञवल्क्यो ब्रूते ।

किञ्च—

अविदित्वा ऋषिं छन्दो दैवतं योगमेव च ।
नाध्यापयेज्जपेद्वापि पापीयान् जायते तु सः ॥
ब्राह्मणं विनियोगञ्च छन्द आर्षञ्च दैवतम् ।
अज्ञात्वा पञ्च यः कुर्याद् न स तत्फलमश्नुते ॥

इति याज्ञवल्क्यवचनात्, "यो वाऽविदितार्षेयछन्दोदैवतेन मन्त्रेण याजयत्यध्यापयति वा" इत्यादिना "गर्तं वा प्रपद्यते तस्मादेतानि मन्त्रे मन्त्रे विद्यात्" इत्यन्तेन वेदवचनेन चावश्यं प्रतिमन्त्रम् ऋषिच्छन्दोदैवतादीनि विजानीयात्। तत्र मार्जनमन्त्रस्य व्यासोक्ता ऋष्यादयो लिख्यन्ते।

आपोहिष्ठादिति तृभिर्मार्जयेत्तु कुशोदकैः ।
सिन्धुद्वीप ऋषिश्छन्दो गायत्र्यापो हि देवता ।
मार्जने विनियोगश्च अब्देवत्ये प्रकीर्तितः ॥ इति ।

"पाठमात्रावसानस्तु पङ्के गौरिव सीदति" इत्युक्तेरर्थावगतिरप्यवश्यमेष्टव्या । तत्रापोहिष्ठेत्यस्या ऋचोऽर्थः—हे आपः ! यूयं मयोभुवः, मय इति सुखनाम, सुखहेतवः स्थ, ताः यूयं नः अस्मभ्यम्, ऊर्जे इति चतुर्थी ऊर्जमिति द्वितीयार्थे द्रष्टव्या । दधातन अन्नमस्मभ्यं दत्तेत्यर्थः । महे महते, रणाय रमणीयाय, चक्षसे ज्ञानाय, पूर्ववद् द्वितीयार्थे चतुर्थी । महाफलदायि सच्चिदानन्दघनाद्वितीयपरमात्मज्ञानं च दत्तेत्यर्थः। यो वः शिवतमो रसः युष्मत्सम्बन्धी यः ब्रह्मात्मैकत्वानुभवरूपो रसस्तस्येहास्मिन्नेव जन्मनि नः भाजनं कुरुत । अत्र दृष्टान्तः—'उशतीरिव मातरः' इति । अपत्यसौख्यं कामयमाना मातरः पुत्रान् क्षीरादिरसं यथा पाययन्ति, तद्वदस्मान् ब्रह्मानन्दरसभाजनं कुरुतेति जलदेवताप्रार्थनमेव मन्त्रार्थः । तस्मै रसाय अरं गमाम वः यस्य रसस्य क्षयाय निवासाय जिन्वथ प्रीता भवथ, तस्मै रसाय, द्वितीयार्थे चतुर्थी, तं रसं ब्रह्मानन्दरसम्, अरम् अलं पर्याप्तमिति यावत् । वः सम्बन्धिनं गमाम गच्छेम । आपोजन यथाचन । हे जलदेवताः, नः अस्मान् पुत्रपौत्रादिसहितान् तादृशब्रह्मानन्दरसानुभवशक्तान् सम्पादयतेति पुनः प्रार्थनमस्मिन्नेव जन्मनि तत्सिद्धय इति ज्ञेयम् । हे आपः ! अस्माकं चित्तशुद्धिं जनयित्वा वेदान्तश्रवणमनननिदिध्यासनानि सम्पाद्य तत्साध्यं सच्चिदानन्दघनापरिच्छिन्नाद्वितीयब्रह्मात्मनावस्थितिरूपमोक्षसाधनमहावाक्यजन्यज्ञानं जनयथेति परमतात्पर्यम् । अत्र सच्चिदानन्दघनं सर्वज्ञं सर्वशक्ति सर्वगतं सर्वान्तर्यामि परं ब्रह्मैवाप्शब्दार्थतयोच्यते, "योऽप्सु तिष्ठन्नपोऽन्तरो यमयति" इति वाजिशाखान्तर्यामिब्राह्मणोक्त्यनुसारेण तं

प्रत्येवैताद्दशप्रार्थनाया युक्तत्वात् , केवलजडरूपाम्मात्रप्रार्थनस्यायुक्तत्वाच्च । बहुवचनञ्च दारादि-शब्दवज्ज्ञेयम् ।

आपोहिष्ठा सुप्रसिद्धा नवपादा भवन्ति ते ।
पादे पादे क्षिपेद् द्वारि ब्रह्महत्यां व्यपोहति ॥

इति भगवान् व्यासः । एवमुक्तविधिना मार्जयित्वा सूर्यश्चेति प्रातरपः पिबेत् । तथा शौनकः—

सूर्यश्चेत्यनुवाकेन प्रातःकाले पिबेदपः ।
आपः पुनन्त्वित्येतेन मध्याह्ने च जलं पिबेत् ॥
अग्निश्चेत्यनुवाकेन सायङ्काले त्वपः पिबेत् ॥ इति ।
प्रोक्षेत् सुरभिमत्या च आपोहिष्ठादिभिस्तथा ।
प्रदक्षिणं परिषिच्य त्वारभेत् श्रुतिचोदितम् ॥

इति पितामहः । श्रुतिचोदितमर्घ्यप्रदानमित्यर्थः ।

अथ पूर्वोक्तमन्त्राणामृषिच्छन्दोदेवताविनियोगा लिख्यन्ते—

सूर्यानुवाकस्याग्निर्ऋषिश्छन्दो गायत्रांऽशुमान् ।
देवता विनियोगोऽपां प्राशने समुपस्पृशेत् ॥
ऋषिरग्निश्चमेत्यस्य सूर्यो वा वामनोऽपि वा ।
छन्दो गायत्रमित्युक्तं देवताग्निः समीरितः ॥
आपःपुनन्तुमन्त्रस्य विश्वेदेवास्तथर्षयः ।
छन्दोऽनुष्टुब्देवतापो बृहस्पतिरथापि वा ॥
आत्मानं प्रोक्षयेत् पश्चात् दधिक्राव्ण इत्यृचा ।
आपोहिष्ठादितिसृभिः ऋग्भिश्च सकुशैर्जलैः ॥
दधिक्राव्ण इत्यस्य वामदेव ऋषिः स्मृतः ।
छन्दोऽनुष्टुब्विश्वेदेवा देवता प्रोक्षणे स्मृताः ॥
व्याहृता तत आत्मानं परिषिञ्चेत् समस्तया ॥

सूर्यश्चेत्यस्यायमर्थः—

सुष्ठु ईरयति प्रेरयतीति सूर्यः परमात्मा आदित्यान्तर्वर्ती, "य आदित्ये तिष्ठन्नादित्यादन्तरोऽयमादित्यो न वेद यस्यादित्यः शरीरं य आदित्यमन्तरो यमयति" इति बृहदारण्यकश्रुतेः। मन्युः क्रोधः, मन्युपतयो रागादयः, तेषां मन्यूत्पादकत्वात्। एते सर्वे मन्युकृतेभ्यो रागादिकृतेभ्यश्च पापेभ्यो मां रक्षन्तु पापजनककामादिवृत्तीर्निवार्य स्वस्वरूपावस्थानलक्षणमोक्षसाक्षात्साधनीभूतामखण्डाकारवृत्तिं जनयित्वा मां रक्षन्त्विति भावः। किञ्च, रात्र्या यत्पापमकार्षम्, रात्र्येति तृतीया रात्राविति सप्तम्यर्थे। मनसा परहिंसादिचिन्तनेन, वाचा अनृतभाषणादिना, हस्ताभ्यामसत्प्रतिग्रहादिना, पद्भ्यामनाक्रमणीयकलिङ्गकेरलादिदेशाक्रमणादिना, उदरेणाभक्ष्यभक्षणादिना, शिश्ना परदाराभिमर्शादिना, उपलक्षणमेतत् सर्वेन्द्रियाणाम्। तथा च त्रिकरण्या यद्यत्कृतं पापं तत्सर्वं रात्रिरवलुम्पतु। अत्र रात्रिशब्देन परमात्मा प्रतिपाद्यते। रा दाने इति धातूत्पन्नराशब्देन चतुर्विधपुरुषार्थप्रदम्, त्रैङ् पालने इति धातूत्पन्नत्रिशब्देन सर्वजगद्रक्षकं च परं ब्रह्म, तदेव सर्वशक्तियुक्तत्वाद् वाङ्कायकृतसकलदुरितनिबर्हणक्षमं भवितुमर्हतीति रात्रिशब्दवाच्यरात्रिदेवताया अपि तदधीनत्वात् सकलसृष्टिस्थितिसंहारकारणं परं ब्रह्मैव ग्राह्यम्। किञ्च, यत्किञ्च दुरितमनेकजन्मान्तरसञ्चितं मयि वर्तते, तत्सर्वं विलुम्पतु नाशयत्वित्यर्थः। तथा च दुरितजनकचित्तवृत्तिनिवारकत्वं रात्रिकृतपापविनाशकत्वं पूर्वजन्मसञ्चितपापपुञ्जनिबर्हकत्वं च समष्ट्योक्तं भवति। एवं च सति ब्रह्मज्ञानोत्पत्तिप्रतिबन्धकपापाभावात् शुद्धान्तःकरणोऽहममृतयोनौ मोक्षकारणे सूर्ये परमात्मनि सर्वप्राणिबुद्धिवृत्तिप्रेरके ज्योतिषि सच्चिदानन्दघने तत्पदलक्ष्ये परब्रह्मणि त्वंपदलक्ष्यं प्रत्यक्चैतन्यस्वरूपं मां जुहोमि, तदात्मनैवावस्थितं भावयामि, "अमृतयोनौ सूर्ये ज्योतिषि" जुहोमि इत्यैक्यबोधकमन्त्रबलादत्रत्यसूर्यज्योतिश्शब्दौ ब्रह्मपरावेव, न देवतात्मपरौ। स्वाहेत्युक्त्वाऽपः पिबेदिति भावः।

(सावशेषम्)



# छात्रोपयोगिव्याकरणविषयविमर्शः

श्रीसभापत्युपाध्यायः, संमानितप्राध्यापकः, वा० सं० वि० वि० वाराणसी ।

## व्याकरणशब्दार्थः

व्याक्रियन्ते शब्दा अनेनेति व्याकरणम्, व्याकृतिसाधनमित्यर्थः । व्याकृतिश्च व्युत्पत्तिः । सा च शास्त्रजन्यप्रकृतिप्रत्ययागमादिस्वरूपतदर्थतत्सम्बन्धज्ञानरूपा, तज्जन्यान्तःकरणवृत्तिरूपा, संस्कारविशेषरूपा वा; नामरूपकरणकजगत्कर्मकप्रकाशनरूपा च । तथा च श्रुतिः—"नामरूपे व्याकरवाणि" इति ।

व्याकरणस्यैव नामान्तरं 'शब्दानुशासनम्' इति । शब्दा अनुशास्यन्ते ज्ञायन्तेऽनेनेति शब्दानुशासनम् । एतेन व्याकरणं शब्दज्ञानसाधनं न तु शब्दनिर्मापकम्, "प्रयुक्तानामन्वाख्यानं व्याकरणम्" इति भाष्योक्तेः ।

यद्यपि भाष्ये "व्याकरणमित्यस्य शब्दस्य कः पदार्थः ?" इत्याशङ्क्य "लक्ष्यलक्षणे व्याकरणम्" इति सिद्धान्तितम् । एतेन व्याकरणत्वस्य लक्ष्यलक्षणसमुदायवृत्तित्वं सूचितम् । यद्यपि व्याकृतिकरणता न समुदाये, शब्दानुशासनशास्त्रत्वानुपपत्तेः । शब्दानुशासनं नाम शास्त्रमधिकृतं बोद्धव्यमित्यस्याष्टाध्यायीमुद्दिश्यैव प्रवृत्तेः । अष्टाध्यायी च नहि लक्ष्यलक्षणरूपा । किञ्च, "प्रयुक्तानामन्वाख्यानं व्याकरणम्" इति स्वोक्तिविरोधापत्तिश्चेति चेन्न, समुदायसमुदायिनोरभेदेन व्याकरणशब्दस्य सूत्रपरत्वेऽपि करणे ल्युडुपपत्तेः । अत एव "यथालक्षणमप्रयुक्ते" इति भाष्योक्तिः सङ्गच्छते ।

वस्तुतस्तु "लक्ष्यलक्षणे व्याकरणम्" इति नहि सिद्धान्तलक्षणम् । "अथवा पुनरस्तु सूत्रम्" इत्येव सिद्धान्तलक्षणम्, "अजव्यवहितपूर्वत्वविशिष्टस्येकः स्थाने यण्" इत्यस्य लक्ष्यं विनाऽनुपपत्त्या सूत्रत्वस्य न्यायादिसूत्रेऽपि सत्त्वात्तद्व्यावृत्तये लक्ष्यस्योपलक्षणत्वावश्यकत्वात् ।

किञ्च, यदि लक्ष्यलक्षणसमुदाये व्याकरणत्वप्रतियोगिका पर्याप्तिः स्यात्तदाऽन्योन्याश्रयापत्तिः । व्याकरणस्य प्रयुक्तान्वाख्यायकत्वेन प्रयुक्तज्ञानं विना व्याकरणज्ञानासम्भवः, व्याकरणज्ञानं विना प्रयुक्तज्ञानासम्भव इत्यन्योन्याश्रयः । अपि च, लक्ष्यलक्षणसमुदितस्य व्याकरणत्वे "शब्दानुशासनं नाम शास्त्रमधिकृतं बोद्धव्यम्" इति भाष्यं विरुध्येत, शब्दानुशासनमित्यस्य शब्दविषयकज्ञान-

साधनार्थकत्वेन शब्दज्ञानस्य व्याकरणज्ञानफलकत्वेन शब्दरूपलक्ष्यघटितस्य व्याकरणत्वासम्भवात् ।

किञ्च, "लघ्वर्थं चाध्येयं व्याकरणम्" इत्युपक्रम्य "ब्राह्मणेनावश्यं शब्दा ज्ञेयाः" इति, "न चान्तरेण व्याकरणं लघुनोपायेन शब्दाः शक्या विज्ञातुम्" इत्युक्तं भगवता पतञ्जलिना । अत्र शब्दा लक्ष्याणीत्यर्थः । तथा च व्याकरणज्ञानप्रयोज्यज्ञानविषया लक्ष्याणीत्युक्तं भवति । तेन लक्षणस्यैव व्याकरणत्वं न तु लक्ष्यघटितसमुदायस्येति स्पष्टमेव ध्वनितम् ।

## वर्णसमाम्नायः

सर्वभाषासु वर्णसंख्यां तत्तद्भाषाध्यायिनश्छात्रा जानन्ति । परन्तु संस्कृतभाषाध्यायिनोऽल्पीयांस एव छात्रा भवेयुर्ये वर्णसंख्यां जानन्ति । यद्यपि पाणिनीयत्वेन प्रसिद्धायां शिक्षायाम्—

त्रिषष्टिश्चतुःषष्टिर्वा वर्णाः शम्भुमते मताः ।
प्राकृते संस्कृते चापि स्वयं प्रोक्ताः स्वयम्भुवा ॥
स्वरा विंशतिरेकश्च[२१] स्पर्शानां [२५]पञ्चविंशतिः ।
यादयश्च स्मृता ह्यष्टौ[८] चत्वारश्च[४] यमाः स्मृताः॥
अनुस्वारो विसर्गश्च ᳵ क ᳵ पौ चापि पराश्रितौ ।
दुःस्पृष्टश्चेति विज्ञेय ऌकारः प्लुत एव च ॥

इत्युक्त्या पाणिनिमते 'दुष्पृष्टः' इत्यनेन "अग्निमीळे" इत्यादौ डकारस्थानिको यो ळकारः स दुस्पृष्टपदेन गृह्यते, प्लुतऌकारश्च । द्वयोः सम्मेलने चतुःषष्टिर्वर्णाः । दुःस्पृष्टस्य त्यागे त्रिषष्टिः । परन्तु पाणिनिना कस्मिंश्चिदपि सूत्रे दुःस्पृष्टस्य ळस्य चतुर्णां यमानां चोपादानं न कृतम् । अतस्तन्मतेऽष्टपञ्चाशदेव वर्णा इत्युपाध्यायाः । एवञ्च पाणिनिमता वर्णाः कतीत्यपि छात्रा बोधनीयाः ।

## षड्विधसूत्राणि

संज्ञा च परिभाषा च विधिर्नियम एव च ।
अतिदेशोऽधिकारश्च षड्विधं सूत्रमीरितम् ॥

इत्युक्तेषु सूत्रेषु किमिदं सूत्रमिति जिज्ञासायां शेखरादौ "आदिरन्त्येन" इति सूत्रैकवाक्यतया वर्णसमाम्नायस्योपकारकतया संज्ञासूत्रत्वमुक्तम् । परन्त्वेवं सत्यारोपितसंज्ञासूत्रत्वस्य

सिद्धत्वेऽप्यनारोपितविशेषसूत्रत्वन्तु दूरापास्तमेव स्यात्। तस्मात् "इष्टबुद्ध्यर्थश्च इष्टान् वर्णान् भोत्स्यामहे" इति भाष्यादेते वर्णा इष्टा इत्युक्तं भवति। वर्णे इष्टत्वञ्च साधुत्वरूपम्। तथा च अकारः साधुः, इकारः साधु इत्येवंरूपेण साधुत्वविधायकतया विधिसूत्रत्वमेवैषाम्। न च वर्णानां साधुत्वे कपड़ादिभाषाशब्दानां साधुत्वापत्तिः, साधुशब्दघटकेष्वेव प्रवृत्तिस्वीकारात्। किञ्चैक-वाक्यतया विशेषसूत्रत्वस्वीकारे "स्वौजसमौट्" इत्यस्यापि सुबादिप्रत्याहारानुरोधेन आदिरन्त्येनेत्येक-वाक्यतया संज्ञासूत्रत्वम्, स्वातन्त्र्येण च सुबादिविधायकतया विधित्वमिति सूत्राणि विभजते। "संज्ञा च परिभाषा च" इति विभागानुपपत्तिः, स्वसमभिव्याहृतपदार्थतावच्छेदकधर्मव्याप्यमिथो-विरुद्धधर्मावच्छिन्नबोधानुकूलव्यापारस्यैव विभागत्वेन प्रकृते विधित्वसंज्ञात्वयोः सामानाधिकरण्येन विभागानुपपत्तेः, सूत्रावृत्त्या तद्दोषपरिहारे गौरवापत्तेरावृत्तौ प्रमाणाभावाच्च।

## अच्प्रत्याहारसाधनम्

एवम् 'अच्' इत्यादिप्रत्याहारसाधनेऽप्यधिकांशतश्छात्रा वञ्चिता एव सन्ति। तथा हि—"आदिरन्त्येन सहेता" (१-१-७१) इति सूत्रमन्त्येनेता सहादिः संज्ञेत्याह। अस्य सूत्रस्य 'अच्' इत्यादिप्रत्याहारो न लक्ष्यम्, अज्ञातस्वरूपबोधकस्यैवोपदेशत्वेन 'अच्' इति शब्दस्य स्वरबोधकत्वेऽपि स्वस्वरूपबोधकत्वाभावेन चस्येत्संज्ञकत्वाभावात्। "ऐऔच्" इत्यस्य स्वरूप-बोधकत्वेऽपि इता चकारेण सह च अकाराभावात्। मध्यस्थैकारादिवर्णव्यवधानेन इता सहादेर-भावात्। अतः "आदिरन्त्येन" इत्यस्य वैयर्थ्यापत्त्या आदिशब्द आदिसदृशपरः, अन्त्यशब्दोऽप्यन्त्य-सदृशपरः। एवञ्च अन्त्येन इता इत्सदृशेन सह उच्चार्यमाण आदिसदृशः, आदिघटितस्य अन्त्यघटित-स्य समुदायस्य घटकानां संज्ञा। अन्त्य इत् ऐऔच् सूत्रावयवश्चकारस्तत्सदृशः 'अच्' शब्दावयवश्च-कारस्तेन सहित आदिः "अइउण्"सूत्रावयवोऽकारस्तत्सदृशः 'अच्' इत्यस्य अकारः। तथा च अन्त्येनेत्सदृशेन चकारेण सहित आदिसदृशः, 'अच्'शब्दः, आदिः "अइउण्" इत्यस्या-कारः, अन्त्य इत् "ऐऔच्" इत्यस्य चकारस्तद्घटितसमुदायः "अइउण् ऋलृक्, एओङ्, ऐ औच्" इति तदवयवानामकारादीनां संज्ञा। तत्र प्रत्याहारेष्वितां न ग्रहणमिति णकारादीना-मिताम् 'अच्' न संज्ञा। एवं सर्वत्र प्रत्याहारः साधनीयः।

## यमस्वरूपविचारः

एवम् "प्रत्याहारेष्वाद्यानां चतुर्णां पञ्चमे परे मध्ये यमो नाम पूर्वसदृशो वर्णः प्रातिशाख्ये प्रसिद्धः" इत्यत्रापि बहूनां भ्रमः। तथा हि—'वर्गेषु' इति बहुवचनेन कुचुटुतुपूनां पञ्चानां ग्रहणम्। 'आद्यानां चतुर्णाम्' इत्यनेन कखगघचछादीनां विंशतेर्वर्णानां ग्रहणम्। वर्णानामन्यतमादिति शेषः। अन्यथा वर्णानामिति षष्ठी दिग्वाचकपरयोगेऽनुपपन्ना स्यात्। पूर्वसदृश इत्यस्य 'पलिक्क्निः' इत्यादौ ककारात्परो नकारात्पूर्वः करूप इति नार्थः, किन्तु ककारनकारयोर्मध्ये वेदे प्रसिद्धं नासिकास्थानकं वर्णसमाम्नायेऽघटितं वर्णान्तरं 'यम'पदवाच्यम्। पूर्वसादृश्यञ्च

बाह्यप्रयत्नकृतम्, न तु स्वरूपकृतम्। स्वरूपेण सादृश्ये इमे अयोगवाहा न क्वचिदुपदिश्यन्ते श्रूयन्ते च, "के पुनरयोगवाहाः ? विसर्जनीयजिह्वामूलीयोपध्मानीयानुस्वारानुनासिक्ययमाः" इति हयवरट्सूत्रस्थभाष्यविरोधापत्तेः। यमानां कखगघादिरूपत्वे तेषां वर्णसमाम्नाये पाठेनायोगवाहत्वभङ्गापत्तेः। नास्ति वर्णसमाम्नाये योगो येषां तेऽयोगाश्च ते वाहाः शास्त्रीयकार्यनिर्वाहका अनुस्वारादयः। किञ्च, "अनुस्वारयमानाञ्च नासिकास्थानमिष्यते" इति शिक्षोक्त्या विरोधश्च। पञ्चमान् विहाय नहि ककारादयो वर्णा अनुनासिकाः। तस्मान्न ककारादिरूपा यमाः, किन्तु ककारादिसहकारेणोच्चार्यमाणाः कचटतपेभ्यः परस्तत्प्रयत्नक एकः, खछठथफेभ्यः परस्तत्प्रयत्नक एकः, गजडदबेभ्यः परस्तत्प्रयत्नक एकः, घझढधभेभ्यः परस्तत्प्रयत्नक एक एवं चत्वारो यमाः। तदुक्तं शिक्षायाम्—"चत्वारश्च यमाः स्मृताः" इति। एतेन वर्गेष्वाद्येभ्यो विंशतेर्वर्णेभ्यः परे विंशतिर्यमा इत्यपास्तम्। प्रातिशाख्ये "कुँ खुँ गुँ घुँ यमाः" इत्युक्तिस्तु ⌣क ⌣ख, ⌣प ⌣फ इतिवदुच्चारणार्थाः कादयो न तु तद्घटितास्तत्स्वरूपा वेत्यवधेयम्।

## भूवादिविचारः

एवम् "भूवादयो धातवः" इत्यत्रापि किञ्चिद्बोद्धव्यम्। तथा हि—अत्र भ्वादिपदेन भ्वादिगणपठिताः शब्दा गृह्यन्ते। ते च प्रयोगस्थभ्वादीनामनुकरणभूताः। तथा चानुकरणस्यानुकार्य्यमर्थः। अनुकार्य्यश्च लक्ष्यस्थो भ्वादिशब्द एवेति सूत्रस्थं भ्वादिपदं शब्दबोधकम्, न तु क्रियावाचकम्। यथा "भू सत्तायाम्" इत्यत्र भूशब्दो भूशब्दवाचक एव न क्रियावाचकः। एवञ्च भ्वादिशब्देन भ्वादिगणपठिता ये शब्दास्तद्वृत्तिर्या आनुपूर्वी तद्वन्तः क्रियावाचिनो धातुसंज्ञका इत्येवार्थः। यद्वा अनुकार्य्यानुकरणयोर्भेदविवक्षयाऽनुकार्य्यस्य लक्ष्यस्थस्य क्रियावाचकत्वे गणस्थस्यापि क्रियावाचकत्वम्। एवमेव "सर्वादीनि सर्वनामानि" इत्यादिसूत्रेषु गणबोधकपदघटितसूत्रेषु सर्वत्र बोध्यम्।

ननु भ्वादिधातूनां क्रियात्वव्याप्यसत्तात्वगमनत्वाद्यवच्छिन्नबोधकत्वेऽपि क्रियात्वप्रकारकक्रियावाचित्वाभावेन क्रियावाचित्वानुपपत्तितादवस्थ्यमिति चेन्न, क्रियात्वप्रकारकक्रियानिष्ठशक्यतानिरूपितशक्तताया धातुत्वावच्छिन्नाया धातुमात्रे स्वीकारात्। अत एव कारकनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दं प्रति वृत्तिज्ञानजन्यक्रियात्वावच्छिन्नोपस्थितिः कारणमिति कारकाणां क्रियायामन्वय इति नियमः संगच्छते॥



# वाराणसेयसंस्कृतविश्वविद्यालयेन प्रकाशिता ग्रन्थाः

## सरस्वतीभवन-ग्रन्थमालायाम्

८६. गर्गसंहिता ( प्रथमो भागः ) श्रीविभूतिभूषणभट्टाचार्येण सम्पादिता । १०.००

८७. बृहच्छब्देन्दुशेखरः ( व्याकरणम् ) नागेशभट्टविरचितः ( १-३ भागाः ) ।
डा० सीतारामशास्त्रिणा सम्पादितः । ४५.००

८८. पदवाक्यरत्नाकरः ( व्याकरणम् ) गोकुलनाथोपाध्यायविरचितः, यदुनाथ-
मिश्रविरचितटीकया सहितः । पण्डितनन्दिनाथमिश्रेण सम्पादितः । १५.००

८९. काव्यप्रकाशविवरणम् ( अलङ्कारः ) गोकुलनाथोपाध्यायविरचितः ।
कविशेखरबदरीनाथझासम्पादितः । ८.००

९०. तारिणीपारिजातः ( तन्त्रम् ) विद्वदुपाध्यायविरचितः । पण्डितरमानाथझा- ८.००
शर्मणा सम्पादितः । ४.००

९१. वाक्यपदीयं ब्रह्मकाण्डम् ( व्याकरणम् ) भर्तृहरिप्रणीतं स्वोपज्ञवृत्तियुतम्,
श्रीरघुनाथशर्मणा विरचितया अम्बाकर्त्र्याख्यया संवलितम् । १०.००

९२. सूक्तिमुक्तावली ( गद्यकाव्यम् ) गोकुलनाथोपाध्यायविरचिता । पण्डित-
भूपनारायणझाशर्मणा सम्पादिता । ७.५०

७. योगिनीहृदयम् ( तन्त्रम् ) अमृतानन्दनाथविरचितया दीपिकया भास्करराय-
विरचितेन सेतुबन्धेन च सहितम् । ( द्वितीयं संस्करणम् ) १०.००

३२. तन्त्ररत्नम् ( मीमांसा ) ( तृतीयो भागः ) पार्थसारथिमिश्रविरचितम् ।
श्री टी० रामचन्द्रदीक्षितेन सम्पादितम् । ५.५०

### मुद्रणालयस्था ग्रन्थाः

१. काव्यप्रकाशदीपिका ( तृतीयो भागः ) चण्डीदासविरचिता ।

२. त्रिपुरारहस्यम् ( तन्त्रम् ) ( ज्ञानखण्डः ) श्रीनिवासभट्टविरचितया तात्पर्यदीपिका-
व्याख्यया सहितम् । ( द्वितीयं संस्करणम् )

३. पारसीकप्रकाशः ( कोशः ) बिहारिमिश्रविरचितः ।

४. हयत ( सिद्धान्तज्यौतिषम् ) ।

५. वाक्यपदीयं द्वितीयं काण्डम् ( व्याकरणम् ) यावदुपलब्धभर्तृहरिप्रणीतस्वोपज्ञ-वृत्त्या, पुण्यराजकृतटीकया, श्रीरघुनाथशर्मविरचित-अम्बाकर्त्रीव्याख्यया च सहितम् ।

## सरस्वतीभवन-निबन्धमालायाम्

### मुद्रणालयस्थौ

१. व्याकरणदर्शनपीठिका—श्रीरामाज्ञापाण्डेयेन विरचिता ।

२. व्याकरणदर्शनवेदिका—श्रीरामाज्ञापाण्डेयेन विरचिता ।

## लघुग्रन्थमालायाम्

१. गैरिकसूत्राणि सवृत्तिकानि जड्युपनामकगङ्गारामोन्नीतानि, श्रीरघुनाथशर्मविरचितविवरणसमेतानि । श्रीव्रजवल्लभद्विवेदेन प्रस्तावना-पाठभेदादिभिः संयोज्य संपादितानि । १.००

२. अष्टादशपुराणव्यवस्था काशीनाथभट्टविरचिता । श्रीमुरलीधरमिश्रेण व्याकरणविभागाध्यक्षेण संपादिता । १.००

३. भङ्गीविभङ्गीकरणम् ( ज्यौतिषम् ) श्रीरङ्गनाथभट्टविरचितम् । संपादकः—श्रीमीठालाल ओझा, ज्यौतिषाचार्यः । २.००

४. प्रमाणविनोदः ( नव्यन्यायः ) श्रीचित्रधरमिश्रविरचितः । श्रीढुण्ढिराजशास्त्रिणा संपादितः । १.५०

५. गलितप्रदीपः ( वेदः ) लक्ष्मीधरसूरिविरचितः । श्रीश्रीकृष्णदेवशर्मणा ऋग्वेदाचार्येण संपादितः । २.००

६. लोहगोलखण्डनं रङ्गनाथदैवज्ञविरचितम्, तथा लोहगोलसमर्थनं गदाधरदैवज्ञविरचितम् ( ज्यौतिषम् ) । सम्पादकः—श्रीमीठालाल ओझा ज्यौतिषाचार्यः । २.००

७. कोविदानन्दः ( व्याकरणम् ) आशाधरभट्टविरचितः । श्रीकालिकाप्रसादशुक्लेन संपादितः । १.५०

## हस्तलिखितग्रन्थानां विवरणात्मिका सूची

| | |
|---|---|
| पञ्चमः खण्डः, प्रथमो भागः ( स्तोत्रम् ) | ७.२५ |
| पञ्चमः खण्डः, द्वितीयो भागः ( स्तोत्रम् ) | ७.२५ |
| षष्ठः खण्डः ( तन्त्रम् ) | ६.०० |
| सप्तमः खण्डः ( पूर्वोत्तरमीमांसे सांख्ययोगौ च ) | ७.०० |
| अष्टमः खण्डः ( न्यायवैशेषिकम् ) | ८.५० |
| नवमः खण्डः ( ज्यौतिषम् ) | ७.५० |

## गङ्गानाथझा-ग्रन्थमालायाम्

१. न्यायकन्दली ( वैशेषिकदर्शनम् ) भट्टश्रीधरविरचिता प्रशस्तपादभाष्यटीका, प्रशस्तपादभाष्येण सहिता । श्रीदुर्गाधरझाशर्मणा हिन्दीभाषानुवादेन सह सम्पादिता । यन्त्रस्था

२. न्यायसिद्धाञ्जनम् ( विशिष्टाद्वैतः ) वेदान्तदेशिकविरचितम् । श्रीनीलमेघाचार्येण हिन्दीभाषयानूद्य सम्पादितम् । यन्त्रस्थम्

## गङ्गानाथझा-प्रवचनमालायाम्

१. वेदविज्ञानबिन्दुः ( वेदः ) म० म० गिरिधरशर्मचतुर्वेदविरचितः । १.००

२. बौद्धदर्शनबिन्दुः ( बौद्धदर्शनम् ) डा० सातकडिमुखोपाध्यायविरचितः । यन्त्रस्थः

३. शैवदर्शनसंग्रहः ( शैवदर्शनम् ) डा० कान्तिचन्द्रपाण्डेयविरचितः । यन्त्रस्थः

## सम्पूर्णानन्द-ग्रन्थमालायाम्

१. दृक्सिद्धपञ्चाङ्गनिर्माणपद्धतिः ( ज्यौतिषम् ) श्रीगणपतिदेवशास्त्रिणा विरचिता, तेनैव संपादिता च । ६.००

२. पाश्चात्त्यं नीतिशास्त्रम्—श्रीविश्वेश्वरसिद्धान्तशिरोमणिना विरचितम् । २.५०

३. अर्वाचीनं ज्योतिर्विज्ञानम्—श्रीरमानाथसहायेन विरचितम् । यन्त्रस्थम्

४. ज्योतिर्विज्ञानम्—श्रीधूलिपालसोमयाजिना विरचितम् । यन्त्रस्थम्

५. अर्वाचीनं मनोविज्ञानम्—श्रीमामराजदत्तकपिलेन विरचितम्। यन्त्रस्थम्

६. अभिनवमनोविज्ञानम्—श्रीप्रभुनाथ-अग्निहोत्रिणा विरचितम्। यन्त्रस्थम्

## गोपीनाथकविराज-ग्रन्थमालायाम्

१. संस्कारदीपकः (धर्मशास्त्रम्) हर्षनाथझाविरचितः। श्रीदुर्गाधरझाशर्मणा संपादितः। ७.००

## पालि-ग्रन्थमालायाम्

१. अभिधम्मत्थसंगहो—अनिरुद्धाचार्यविरचितः। यन्त्रस्थः

२. जातकट्ठकथा—बुद्धघोषाचार्यविरचिता। (प्रथमो भागः) यन्त्रस्था



# सारस्वती सुषमा

## वाराणसेयसंस्कृतविश्वविद्यालयपत्रिका

१. एषा देशे विदेशे च लब्धप्रसारा त्रैमासिकी संस्कृतपत्रिका ।

२. अस्याः प्रकाशनं प्रतिवर्षं ज्येष्ठभाद्रपदमार्गशीर्षफाल्गुनपूर्णिमासु भवति ।

३. अस्याः प्रधानमुद्देश्यं संस्कृतज्ञेषु मौलिकानुसन्धानप्रवृत्तेः समालोचना-प्रवृत्तेश्चोद्बोधनं प्रोत्साहनं चास्ति ।

४. अस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्य विदुषां मौलिकविचारपूर्णा अनुसंधानप्रधाना निबन्धाः प्रकाश्यन्ते ।

५. लेखकेन प्रकाशितस्य निबन्धस्य पञ्चविंशतिः प्रतिमुद्रणान्युपलब्धानि स्युः ।

६. अस्य वार्षिकं मूल्यं सप्त रूप्यकाणि, प्रत्यङ्कं च रूप्यकद्वयं वर्तते ।

७. पत्रिकासम्बन्धी सर्वविधः पत्रव्यवहारः "सम्पादक, सारस्वती सुषमा, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी–२" इति संकेतेन विधेयः ।

---

प्रकाशक—श्री क्षेत्रेशचन्द्रचट्टोपाध्याय, संचालक—अनुसंधान संस्थान, वाराणसेय संस्कृत विश्वविद्यालय, वाराणसी ।

मुद्रक—श्री बलदेवदास, संसार प्रेस, संसार लिमिटेड, वाराणसी ।